। श्रेष्ठि देवचन्द्र लालभ्रातृ–जैनपुस्तकोद्धारे–ग्रन्थाङ्कः ५१ ।

श्रीमद्भट्टारकश्रीविजयसेनसूरिप्रसादितपण्डितश्रीमच्छुभविजयगणिसङ्कलित–प्रश्नोत्तरमय-

# प्रश्नरत्नाकराभिधः श्रीसेनप्रश्नः ।



प्रसेधिका–श्रेष्ठि देवचंद्र लालभ्रातृ जैनपुस्तकोद्धारकोशागारसंस्था–प्रसेधिकारकः–शाह नगीनभाई घेलाभाई जव्हेरी, अस्य कार्यवाहकः ।
अयं ग्रन्थो मोहमयीपत्तने "मुम्बई वैभव" मुद्रणप्रासादे सर्व्हंटस ऑफ इंडिया सोसायटीज् बिल्डिंग, सॅन्डहर्स्ट रोड.
गिरगांव द्वारा मुद्रापितः प्रकाशितश्च स्वयं ।

श्रीवीरनिर्वाणात् २४४५. | विक्रमनृपस्य १९७५. | क्राईस्टस्य सन् १९१९.

प्रथमसमये प्रतयः १०००. ] | निष्क्रय एकरूप्यकः । | [ मुम्बय्याम्.

Printed by Chintaman Sakharam Deole, at the Bombay Vaibhav Press, Servants of India Society's Building, Sandhurst Road, Girgaon, Bombay.

Published by Shah Naginbhai Gholabhai Javeri, No 426 Javeri Bazar, Office of Sheth D L J P. Fund, for Sheth Devchand Lalbhai Jain, Pustakoddhar Fund, Bombay

॥ अर्हद्भ्यो नमः ॥

# ॥ प्रश्नोत्तररत्नाकराभिधानसेनप्रश्नस्य प्रस्तावना ॥

विदितमेतदार्हतानां विदुषां यदुत सर्वोऽपि संघस्तावत् चतुर्वर्णाकीर्णोऽपि अव्याबाधसुखमयमव्ययपदमभिलाषुको मार्गं तस्य यथाशक्ति सम्यग्दर्शनज्ञानचारित्रात्मकमनुशीलयति, सम्यग्दर्शनाद्यात्मके च मार्गे तदैव स्यात् याथातथ्येन स्थैर्यं यदि न स्यात् जीवादिपदार्थबोधे शंकामहाशल्यं, सति च तस्मिन् सम्यक्त्वस्य निर्मूलकाषंकषणेन सांशयिकमिथ्यात्वस्य भवप्रपञ्चमहीरुहबीजस्यैव प्रादुर्भावो झटिति, प्रादुर्भूते च मिथ्यात्वे कलिबीजे क्व सम्यग्ज्ञानकल्पवृक्षांकुरः क्व चाज्ञानावृते इवासज्ज्ञानावृते जीवसौधे सच्चारित्रनृपमीलनानन्दः, तथा च कोतस्त्य एवानाबाधः स्वभावानन्दः ? ततः सुष्ठूच्यते 'मूलं दारं पइट्ठाणं आहारो भायणं निही ' अत एव सत्स्वपि निष्कलङ्कबाधामितज्ञानरत्नाकरश्रीमद्गणभृत्प्रणीतेषु वाङ्मयेषु श्रीमद्भद्रबाहुस्वामिप्रभृतिश्रुतकेवल्यादिपूज्यतमैर्वितितेषु शास्त्रसंदोहेषु सम्यक्त्वमोहनीयकर्माणुवेदनोद्भूतभव्यमनःशङ्काशङ्कुसमुद्धारस्यावश्यकत्वात् वितेने पूज्यैः श्रीमद्विजयसेनसूरीन्द्रैः प्रयासः, स च तादृशो नाभविष्यत् फलेग्रहिः यदि श्रीमन्तः शुभविजया नासंग्रहीष्यन् तत्रभवदीयप्रश्नोत्तराणि, अत एव चास्याभिधा सेनप्रश्न इति प्रश्नोत्तररत्नाकर इति च, आद्यायाः कर्तृनामाङ्कितत्वात् पश्चिमायाश्च अभिधेयानुसारिनामत्वात्, प्रयतितं चैवं नहि सर्वाः शङ्काः शास्त्रोक्तीरनुसृत्यैव समाधातु शक्या इति यद्यपि बहुषु प्रश्नोत्तरेषु शास्त्रोक्तीरनुश्रित्य समाहितं तथापि अनेकत्र स्पष्टतथाविधशास्त्रोक्त्यसद्भावमालोक्य परम्परया केषुचित् स्थलेषु च स्वमनीषाप्राग्भारेणापि समाहित, तत एव अत्र क्वचित् कदाचित् स्यादनाभोगविलसितं नोद्भासितव्यं धीधनैः अनाभोगस्य छद्मस्थानां स्वाभाविकत्वात्, न चैवं सति नोपादेयोऽयं ग्रन्थः क्वचन क्वचनानाभोगविलासादिति, यतः शास्त्रोक्तीः परम्परा चानुगम्य विहितानामुत्तराणा सुतरामुपादेयत्वात् नानाश्वासगन्धोऽपि तथाविधेषु स्थलेषु स्वमनीषोन्मेषेऽपि न तथाविधानां विपश्चितां संभवत्यनाभोगविलसितता तथापि स्यात् क्वाचित् कथंचित् क्षन्तव्यं धीधनैः न हि सत्पुरुषाश्चन्द्रे कुरङ्गं कलङ्कतया निश्चिन्वन्तोऽपि तदीयसौम्यमहिमवशीकृतान्तःकरणा विजहति विधूपमां अत्र तु कलङ्कसंभावनयैवैतत्परीहारो विहाय हासपोषं

। अर्हम् ।

# । अथ श्रीसेनप्रश्ने साक्षीभूतग्रन्थाः ।

| नंबर | नाम | पत्रांक |
|---|---|---|
| १ | आवश्यकबृहद्वृत्तिः | १-८-१३-१५-८२-८९ |
| २ | प्रज्ञापनावृत्तौ | २-६-६-७-९-१५-१८-१९-२०-२३-२८ ३०-३५-५४-५५-५९-७९-८५-९२ १०३-१०३-१०४-११२-११२ |
| ३ | तीर्थकल्पादिः | २ |
| ४ | सामाचारी | २-२२-५९-८०-१०६-१०६-१०८ |
| ५ | जीवाभिगमवृत्तिः | २-४-९-२४-३४-३४-५५-८३-८५-८६ १०३-१०३ |
| ६ | ऋषिदत्ताकथादिः | २ |
| ७ | आवश्यकवृत्तिः | २-९-१९-२०-३२-३३-३७-४६-५५-५९ ७१-७२-७२-८०-९६-१०९ |

| नंबर | नाम | पत्रांक |
|---|---|---|
| ८ | व्यवहारवृत्तिः | ३ |
| ९ | आवश्यकनिर्युक्तिः | ३-१५-२४-४६-८०-८१-८५-९० |
| १० | भगवतीवृत्तिः | ३-५-६-७-९-११-१४-१४-१७-१९-२० २०-२५-३०-४२-४४-४४-४९-५०-५३ ५५-५८-५९-७१-७४-७५-८२-८४-८९ ८९-९२-९९-१०३-१०३-११४ |
| ११ | कल्पकिरणावली | ३-४६-४७-७५-९५ |
| १२ | कल्पसूत्रावचूरी | ३ |
| १३ | पौषधविधिप्रकरण | ४ |
| १४ | कल्याणकस्तोत्रं | ४ |
| १५ | जम्बुद्वीपप्रज्ञप्तिः | ४-९-१७-२४-३४-३९-५३ ५१-९८ १०३-११२ |

साक्षीभूत ग्रन्थाः ।

| नंबर | नाम | पत्रांक |
|---|---|---|
| १६ | जम्बूद्वीपसंग्रहणिः | ४-१० |
| १७ | जम्बूद्वीपसमासः | ४ |
| १८ | उपदेशरत्नाकरः | ४ |
| १९ | महानिशीथम् | ४ ११-२१-४३-४४-४४-५५-५७-५९-<br>८४-९९-१०१ |
| २० | विचारामृतसंग्रहः | ४-९-२०-५५-८२ |
| २१ | जीतव्यवहारः | ४ |
| २२ | प्रवचनसारोद्धारवृत्तिः | ५-७-२१-३५-४४-४७-५४-५९-६२-<br>७६-८३-८५-८८-९०-९५-९५-१०२-<br>१०६-११२ |
| २३ | वृद्धश्रीशत्रुञ्जयमाहात्म्यं | ५-५-४१-५८-९९ |
| २४ | शान्तिनाथचरित्रं | ५-५३ |
| २५ | हैमवीरचरित्र | ५-६४-५१-७८-९९-१०४ |
| २६ | स्तोत्रम् | ५ |
| २७ | समवसरणस्तोत्रम् | ५ |

| नंबर | नाम | पत्रांक |
|---|---|---|
| २८ | जिनभद्रगणिकृतबृहत्संग्रहणिः | ५<br>५-४५-५३-५६-५६-५२-८९ |
| २९ | ऋषिमण्डलवृत्तिः | ५-८-१३-१३-१४-३२-३७-४४-५३-५९ |
| ३० | श्राद्धविधिवृत्तिः | ७०-९०-९१-९५-१०४-१०५-११० |
| ३१ | स्थानाङ्गसूत्रं | ६-६-१९-३६-४८-७५-९०-९६-१०३-११४ |
| ३२ | दशवैकालिकवृत्तिः | ६-९-१९-८४-९७ |
| ३३ | पाक्षिकसूत्रवृत्तिः | ६-८९ |
| ३४ | योगविधिः | ६-६०-७२ |
| ३५ | आवश्यकहारिभद्रीं | ७-२४-२६-४३-४६-४७-५२-८९-९५ |
| ३६ | योगशास्त्रवृत्तिः | ७-१०-१७-१७:१८-१९-२७-४४-४८-<br>५६-५२-५७-५९-७२-७७ ८३-८३-८४-<br>१०६-१०९-११३-११४ |
| ३७ | संघाचारवृत्तिः | ७-६० |
| ३८ | विहरमाणजिनैकविंशतिस्थानकं | ७ |
| ३९ | जिनप्रभसूरिकृतदीपावलिकाकल्पः | ७ |

| नंबर | नामानि | पत्रांक |
|---|---|---|
| ७० | चतुर्थकर्मग्रन्थः | १६ |
| ७१ | राजप्रश्नीयवृत्तिः | १६-८४-८६ |
| ७२ | उपदेशमालावृत्तिः | १७-१९-७३ |
| ७३ | आचाराङ्गवृत्तिः | १७-२०-२०-२०-३८-४३-५४-८०-८५ |
| ७४ | सप्ततिशतस्थानकम् | ८९-१७-५५-९६-१०३ |
| ७५ | वसुदेवहिण्डी | १८-३४-४५-४६-५५-५५-१०४ |
| ७६ | दशवैकालिकबृहद्वृत्तिः ( हारिभद्रीया ) | १९-५९-५०-५०-८२ <br> १९-५९-५०-५०-८२ |
| ७७ | आवश्यकचूर्णी | १९-२४-३२-४६-५६-५९-५९-७४-८३ <br> ९१-९१-१०७-११२ |
| ७८ | दिनकृत्यवृत्ति. | १९ |
| ७९ | आचाराङ्गनिर्युक्तिः | १९ |
| ८० | दीपालिकाकल्पः | २१-२३-८५-१०१ |
| ८१ | दुष्षमाकालसंघस्तोत्रम् | २१-१०२ |
| ८२ | आचारप्रदीपादिः | २२ |

| नंबर | नामानि | पत्रांक |
|---|---|---|
| ८३ | पौषधविधिप्रकरणादिः | २२ |
| ८४ | दिनचर्यादिः (देवसूरिकृता) | २२ |
| ८५ | कल्पवृत्तिः | २२ |
| ८६ | परिशिष्टपर्व | २३-५२-५४-६३-१६-८५ ८८ |
| ८७ | ऋषभचरित्रम् ( हेमाचार्यकृतम् ) | २४-४६-४७-४७-७४ |
| ८८ | श्राद्धदिनकृत्यः | २५-४४-५८ |
| ८९ | समवायाङ्गसूत्रम् | २५-४९-५५-१०६ |
| ९० | जीवसमासवृत्तिः | २६-१०३ |
| ९१ | महाभाष्यम् | २७ |
| ९२ | कल्पचूर्णी | २७-७५ |
| ९३ | विशेषावश्यकटीका | २७-६५-८२-८२ |
| ९४ | हरिप्रश्नसमुच्चयः | २८ |
| ९५ | उपदेशसप्ततिका | २९ |
| ९६ | महत्कल्पवृत्तिः | २९ ४३ ४३ |
| ९७ | भवभावनावृत्तिः | ३०-४५ |

| नंबर | नामानि | पत्रांक |
|---|---|---|
| १२७ | श्रीसुपार्श्वचरित्रम् | ४७ |
| १२८ | श्री शान्तिचरित्रम् | ४७-९८ |
| १२९ | श्रीचन्द्रप्रज्ञप्तिवृत्तिः | ४९ |
| १३० | लब्धिस्तोत्रम् | ५० |
| १३१ | दशाश्रुतस्कन्धः | ५० |
| १३२ | पञ्चनिर्ग्रन्थिअवचूर्णी | ५० |
| १३३ | वीरंजयसेहराभिधक्षेत्रविचारवृत्तिः | ५०-९२ |
| १३४ | कालसप्ततिः | ५०-१०२ |
| १३५ | खरतरकृतसन्देहदोलावली | ५० |
| १३६ | निशीथभाष्यम् | ५० |
| १३७ | उपदेशतरंगिणी | ५० |
| १३८ | उपदेशरसालः | ५० |
| १३९ | आवश्यकटीप्पनकम् | ५१-९३-९८ |
| १४० | सम्यक्त्वरहस्यवृत्तिः | ५२ |
| १४१ | शान्तिचरित्रम् ( वेश्मरत्नाख्यं ) | ५२ |
| १४२ | औपपातिकसूत्रम् | ५२-५१-७३-९८-११४ |
| १४३ | अजितनाथचरितम् | ५२ |
| १४४ | भोजचरितम् | ५२ |
| १४५ | आवश्यकमलयगिरिवृत्तिः | ५४-६३-९१ |
| १४६ | श्रीशान्तिचरित्रम् ( अजितसिंहसूरिकृतं ) | ५५ |
| १४७ | पाक्षिकसूत्रबृहद्वृत्तिः | ५५ |
| १४८ | अनुयोगद्वारवृत्तिः | ५५-५७-५८-७७-८७ |
| १४९ | कथावलीप्रथमखण्डम् | ५५ |
| १५० | उत्तराध्ययनचतुर्दशसहस्रीवृत्तिः | ५६-११३ |
| १५१ | बृहत्क्षेत्रविचारटीका मलयगिरिकृता | ५६ ६२ |
| १५२ | प्रश्नोत्तरसमुच्चयवचनम् | ५६ ८१ |
| १५३ | प्राकृतदीपालीकाकल्पः | ५६ |
| १५४ | संस्कृतकालिकाचार्यकथा | ५६ |
| १५५ | श्राद्धविधिविनिश्चयः | ५६ |
| १५६ | भरहेसरबाहुबलीवृत्तिः | ५६ |

| नंबर | नामानि | पत्रांक |
|---|---|---|
| १५७ | प्रत्याख्यानप्रकीर्णकम् | ५७ |
| १५८ | मरणसमाधिप्रकीर्णकम् | ५७ |
| १५९ | महाप्रत्याख्यानप्रकीर्णकम् | ५७ |
| १६० | कथानककोशः ( जिनेश्वरसूरिकृत ) | ६१ |
| १६१ | विचारसप्ततिवृत्तिः | ६२ |
| १६२ | सामाचार्या अवचूर्णी ( भावदेवसूरिकृता ) | ६२ |
| १६३ | पिण्डविशुद्धिः | ६३ |
| १६४ | द्वासप्ततिः | ५४ |
| १६५ | नन्दीसूत्रटीका | ५५-७१-८८ |
| १६६ | दोघट्टीवृत्तिः | ५५ |
| १६७ | मण्डलप्रकरणम् | ६७ |
| १६८ | उमास्वातिवाचकवचनम् | ६७ |
| १६९ | मुनिसुन्दरसूरिकृतगुर्व्वावली | ७१ |
| १७० | तीर्थकल्पः | ७१ |
| १७१ | द्वादशजल्पः | ७२ |

| नंबर | नामानि | पत्रांक |
|---|---|---|
| १७२ | हैमीयं पद्मचरित्रम् | ७४ |
| १७३ | वन्दनकनिर्युक्तिः | ७५ |
| १७४ | नवतत्त्वमहाचूर्णी | ७६ |
| १७५ | प्रतिक्रमणगर्भहेतुबालावबोध | ७७ |
| १७६ | विवेकविलासः | ७७ |
| १७७ | नाममाला | ७७ ७९ |
| १७८ | वीतरागस्तववृत्तिः | ७७ |
| १७९ | सूत्रकृदङ्गदीपिका | ७७ |
| १८० | व्यवहारसूत्रवृत्तिः | ७८-१०१ |
| १८१ | प्रश्नोत्तरग्रन्थः | ७८ |
| १८२ | शीलभावनासूत्रवृत्तिः | ८० |
| १८३ | पिण्डनिर्युक्तिः | ८१ |
| १८४ | उपाशकदशाङ्गं | ८३-८६-१०९ |
| १८५ | पञ्चाशकचूर्णी | ८४ |
| १८६ | श्राद्धप्रतिक्रमणसूत्रचूर्णी | ८४ |

॥ श्री अर्हद्भ्यो नमः ॥

# । श्री सेनप्रश्नाभिधानग्रन्थस्य प्रश्नकारकाभिधानानुक्रमणिका ।

श्रेष्ठि देवचन्द्र लालभाई—जैनपुस्तकोद्धार—ग्रन्थाङ्के—

# श्रीविजयसेनसूरिप्रसादितश्रीशुभविजयसङ्कलित-प्रश्नोत्तरमये सेनप्रश्ने.



## प्रथमोल्लासः ।

ॐ श्रीवीतरागाय नमः ।

प्रणिपत्य परं ज्योतिः, प्रशान्तदोषं सतां सदा ध्येयम् । प्रत्यूहव्यूहभिदे, लोकालोकप्रकाशकरम् ॥ १ ॥
तत्तद्बहुश्रुतावलिसद्भाविनिर्मितविचित्रपृच्छानाम् । श्रीविजयसेनसूरिप्रसादितान्युत्तराणि मया ॥ २ ॥
अङ्गोपाङ्गप्रकरणतट्टीकागुरुपरम्परादीनाम् । सम्मत्याऽऽत्मस्मृतये सङ्गृह्यन्ते यथाऽवगमम् ॥ ३ ॥

[ त्रिभिर्विशेषकम्. ]

# महोपाध्यायश्रीविमलहर्षगणिकृतप्रश्नास्तदुत्तराणि च

यथा—ज्ञानपञ्चम्युद्यापनस्वं ज्ञानद्रव्यमुत देवाग्रे ढौकितत्वेन देवद्रव्यमेव इति प्रश्नोऽत्रोत्तरम्—यावद् ज्ञानोपकरणं तावत् सर्वं ज्ञान द्रव्यं चित्कोशे न मोच्यम्, अन्यत्तु सर्वं देवद्रव्यम्, इति ज्ञायते ॥ १ ॥

तथा—कृत्रिमजिनप्रतिमानामुत्कर्षतो जघन्यतश्च किं मान ?, यदि पञ्चधनुःशतान्युत्कृष्टं जघन्यमङ्गुष्ठप्रमाणं तदा श्रीभरतेनाष्टापदे स्वस्व-शरीरप्रमाणोपेतेषु श्रीऋषभादिचतुर्विंशतिजिनबिम्बेषु ( कारितेषु ) उत्सेधाङ्गुलेन सप्तहस्तमाना श्रीवीरस्वामिनो मूर्तिर्भरतस्याङ्गुष्ठप्रमाणाऽपि कथं भवति ?, भरतस्यैकस्मिन्नात्माङ्गुले उत्सेधाङ्गुलसत्कानि षोडशाङ्गुलाधिकानि चत्वारि धनूंषि भवन्तीति प्रश्नोऽत्रोत्तरम्—भरतेन श्रीमहावीरशरीरप्रमाणेन तस्याः कारितत्वात् यद्यपि सा भरतस्यात्माङ्गुलप्रमाणा न भवति तथाऽपि न किमप्यनुपपन्नं, भरताङ्गुलप्रमाणस्यात्रानाधिकृतत्वात्, तस्य च प्रायिकत्वादिति ॥ २ ॥

तथा—श्रुतस्तवसिद्धस्तवयोः कस्मिन्नावश्यकेऽन्तर्भाव इति ? प्रश्नोऽत्रोत्तरम्—श्रुतस्तवसिद्धस्तवयोः कायोत्सर्गावश्यकेऽन्तर्भाव इत्या-वश्यकबृहद्वृत्यनुसारेण ज्ञायते ॥ ३ ॥

तथा—यथा तीर्थकृद् द्वादशानां पर्षदां पुरः चतूरूपभाक् योजनगामिन्या देशनया धर्मं दिशति, धर्म्मकथनानन्तरं स्वामिनि देवच्छन्दे प्राप्ते तथैव चतूरूपोपयुक्तस्तादृश्या देशनया गणभृद्धर्म्मं दिशति उत सहजस्वरानुभावेनैकरूपेण धर्म्मं दिशति ?, यद्येकरूपभाक् तदा द्वादशानां पर्षदां साङ्कर्यमुत तथैवावस्थितिरिति ? प्रश्नोऽत्रोत्तरं—तीर्थकृद्देशनाऽनन्तरं द्वितीयपौरुष्यां स्वाभाविकेन रूपेण गणभृद्देशना करोति इति अवसीयते। चतूरूपतया

योजनगामिन्या वाण्या देशनाकरणं तु तीर्थकृतामेवातिशयः शास्त्रे प्रतीतोऽस्ति, न गणभृतामिति, पर्षदां साङ्कर्यमाश्रित्यापि तदवसरौचित्येन यादृच्छिकी प्रवृत्तिरवसेया, व्यक्तैकपाक्षिकनियामकाक्षराभावादिति ॥ ४ ॥

तथा—विजयादिविमानवासिनो देवा नारकतिर्यग्भवनपत्यादिषु यान्ति न वा इति ? प्रश्नोऽत्रोत्तरं—ते देवा आनन्तर्येण पारम्पर्येण वा नारकतिरश्चोर्भवनपतिव्यन्तरज्योतिष्केषु च नायान्तीत्यक्षराणि प्रज्ञापनायां पञ्चदशपदवृत्तौ ॥ ५ ॥

तथा— यस्याष्टावतिचारगाथा नायान्ति तेनाष्टौ नमस्कारा गण्यन्ते, परं गाथाया उच्छ्वासा द्वात्रिंशद्भवन्ति नमस्कारचतुष्कस्यापि तथैव, नमस्काराष्टकस्य तु चतुष्षष्टिरुच्छ्वासा भवन्ति तत्कथं, इति ? प्रश्नोऽत्रोत्तरं—यस्याष्टौ गाथा नायान्ति तस्याष्टनमस्कारकार्योत्सर्गः कार्यते, न तूच्छ्वासमानमिति ॥ ६ ॥

## अथ महोपाध्यायश्रीमुनिविजयगणिकृतप्रश्नास्तदुत्तराणि च ॥

यथा—वासुदेवोत्पाट्या कोटिशिला शाश्वत्यशाश्वती वा ?, सा च कुत्र स्थानकेऽस्ति ?, तथा सर्वैर्वासुदेवैस्सर्वाऽप्युत्पाट्यतेऽथवा एकदेशेन ? तथा नराणां कोट्योत्पाट्या कोटीशिलेति यथार्थं नामान्यथा वेति ? प्रश्नोऽत्रोत्तरं—कोटिशिलाऽशाश्वतीति ज्ञायते, गङ्गासिन्धुवैताढ्यादिशाश्वतपदार्थानां मध्ये शास्त्रे तस्या अदर्शनात्, तथा सा मगधदेशे दशार्णपर्वतसमीपे चास्तीति । तथा सर्व्वैरपि वासुदेवैस्सर्व्वाऽप्युत्पाट्यते, न त्वेकदेशेन, परं प्रथमेन छत्रस्थानं चरमेण च भूमेश्चतुरङ्गुलानि यावन्महता कष्टेन जानु यावद्वा नीयते । तथा नराणां कोट्योत्पाट्यत्वेन श्रीशान्तिनाथादिजिनपट्टतीर्थगतानेकमुनिकोटीनां तत्र सिद्धत्वेन च कोटिशिलेत्यभिधीयत इत्येतदक्षराणि तीर्थकल्पादौ सन्तीति ॥ ७ ॥

तथा—सान्ध्यप्रतिक्रमणस्वाध्यायप्रान्तवदन्येष्वपि स्वाध्यायप्रान्तेषु संपूर्णो नमस्कारः कथनीयो न वेति ? **प्रश्नोऽत्रोत्तरं**—यत्रादेशद्वयं तत्र स्वाध्याये नमस्कारद्वयभणनं, यत्र चैकादेशस्तत्रैक एव नमस्कारः पठनीय इति । सान्ध्यप्रतिक्रमणस्वाध्यायप्रान्ते संपूर्णनमस्कारपठनं सामाचार्यादौ न दृश्यते, परम्परया तु दृश्यते, तेन तदपि मङ्गलरूपत्वाददोषमेवेति ॥ ८ ॥

**तथा**—पाक्षिकक्षामणकान्ते 'इच्छामो अणुसट्ठिंति' गीतार्थमन्तरेणान्यैर्भणनीयं न वेति ? **प्रश्नोऽत्रोत्तरं**—'इच्छामो अणुसट्ठिंति' सर्वैः पठनीयं सामाचार्यां प्रोक्तमस्ति इति ॥ ९ ॥

**तथा**—मत्ताङ्गदादयो वनस्पतिविशेषाः अभ्रादिवद्विश्रसापरिणामपरिणता न वेति ? **प्रश्नोऽत्रोत्तरं**—मत्ताङ्गदादयो जीवाभिगमवृत्त्याद्यनुसारेण विश्रसया—स्वभावेन तथाविधक्षेत्रादिसामग्रीजनितेन विश्रसापरिणामपरिणतास्सन्ति, ऋषिदत्ताकथादौ तु कल्पद्रुमबीजवपनादिदर्शनाद्वनस्पतिविशेषा अपि ज्ञायन्ते इति ॥ १० ॥

तथा—चिर्भटकप्रभृति सबीजवस्तु वह्नितापमन्तरेण केवलराजिकासंस्कारेणाचित्तं भवति न वा इति ? **प्रश्नोऽत्रोत्तरं**—आमचिर्भटकप्रमुखं सबीजं निर्बीजं वा प्रबलाग्निलवणसंस्कारं विना प्रासुकं न भवतीति ॥ ११ ॥

**तथा**—**सामाचार्यां** नवमद्वारे कालग्रहणविधौ 'गिलिउग्गिलिए' इतिशब्देन किमुच्यते ? तत्साक्षरं प्रसाद्यमिति ? **प्रश्नोऽत्रोत्तरं**—मार्जारादिना मूषिकादौ 'गिलितोद्गिलिते' इति गिलितस्सन्नुद्गिलितो—वान्तस्तस्मिन्; कोऽर्थः ?—स्थानान्तरे गिलित्वा वसतेः षष्टिहस्तमध्ये आगत्य वान्तेऽस्वाध्यायो न भवतीत्यभिप्राय **आवश्यकवृत्त्यादा**वस्तीति ॥ १२ ॥

# अथ सूर्यपुरीयश्राद्धकारितोपाध्यायश्रीकल्याणविजयगणिकृतप्रश्नास्तदुत्तराणि च

यथा—एकः पार्श्वस्थादिर्मूलकर्म्मादिषु दुष्टकर्मकारी परं शुद्धप्ररूपकोऽपर उत्सूत्रप्ररूपकः परं तपःप्रभृतिभूयःक्रियावान् एतयोर्मध्ये को गौरववान् कश्च लाघववानिति ? प्रश्नोऽत्रोत्तरं—एतयोर्मध्येऽयं गुरुरयं च लघुरिति निर्णयः कर्त्तुं न शक्यते, तथाविधसिद्धान्ताक्षरानुपलम्भाज्जीवपरिणामानां वैचित्र्याच्च, सर्वथा निर्णयस्तु सर्व्वविद्वेद्यो, व्यवहारवृत्त्या तूत्सूत्रप्ररूपको गौरववानिति सम्भाव्यते ॥ १३ ॥

तथा—अगीतार्थस्य स्वातन्त्र्येण विहारेऽनन्तसंसारितैकान्तिक्यन्यथा वेति प्रश्नोऽत्रोत्तरं—अगीतार्थस्य स्वातन्त्र्यविहारे अनन्तसंसारिता प्रायिकीति ज्ञायते, कर्म्मपरिणतेर्वैचित्र्यादिति ॥ १४ ॥

तथा—साधूनां मासकल्पादिविधिना विहार एकान्तिकोऽन्यथा वा इति ? प्रश्नोत्रोत्तरं—साधुनां मासकल्पादिविहारो नैकान्तिको, यतः कारणाभावे ते मासकल्पादिविधिनैव विहरन्ति, कारणे तु " पंचसमिआ तिगुत्ता, उज्जुत्ता संजमे तवे चरणे । वाससयंपि वसंता, मुणिणो आराहगा भणिआ ॥ १ ॥ " इत्यादिवचनाद्बहुतरमपि कालमेकत्र तिष्ठन्तीति ॥ १५ ॥

तथा—इहलोकार्थं एकाक्षनालिकेरादिपूजने मिथ्यात्वं भवति न वा इति ? प्रश्नोऽत्रोत्तरं—ऐहिकफलार्थं दक्षिणावर्त्तशङ्खादेरिव एकाक्षनालिकेरादेरपि पूजने मिथ्यात्वं ज्ञातं नास्तीति ॥ १६ ॥

तथा—सम्यग्दृष्टिव्यतिरिक्तानां जीवानां सर्व्वथा निर्जरा नास्त्येव ? काचिदस्ति वा इति ? प्रश्नोऽत्रोत्तरं—सम्यग्दृष्टिव्यतिरिक्ताना जीवानां सर्व्वथा निर्ज्जरा नास्ति एव इति वक्तुं न शक्यते । " अणुकंपऽकामनिज्जर, बालतवे दाणविणयविब्भंगे । संजोगविप्पओगे

वसणुसवइड्ढिसक्कारे ॥ १ ॥ " इति आवश्यकनिर्युक्तौ मिथ्यादृशा सम्यक्त्वप्राप्तिहेतुत्वकामानिर्ज्जराया उक्तत्वात् केषाञ्चिच्चरकपरिव्राजकादीनां स्वाभिलापपूर्व्वकं ब्रह्मचर्यपालनादत्तादानपरिहारादिभिर्ब्रह्मलोकं यावद्गच्छता सकामनिर्ज्जराया अपि सम्भवाच्चेति ॥ १७ ॥

तथा—उत्सूत्रप्ररूपका महाव्रतपालनतपश्चरणादिकां क्रियां कुर्व्वन्तः कर्म्मलघुका भवन्ति न वा इति ? प्रश्नोऽत्रोत्तरं—उत्सूत्रप्ररूपका महाव्रतपालनादिक्रियासहिता निह्नवादय उत्कर्षतो नवमग्रैवेयकं यावद्यान्ति, तेन महाव्रतपालनादिक्रियावतां तज्जन्यं शुभफलं भवतु, परं तेषां कर्मणा लघुकता गुरुकता च सर्व्वविद्वेद्येति ॥ १८ ॥

## अथोपाध्यायश्रीमेघविजयगणिकृतप्रश्नास्तदुत्तराणि च

यथा—श्रीभगवत्यां चतुर्लोकपालाना स्वस्वादिक्षु स्थितिः प्रतिपादिताऽस्ति, परं तेषा ग्रह १ दण्ड २ डिम्बा ३ तिवर्षा ४ ऽयआकरादीनि ५ पृथक् पृथक् कृत्यानि दक्षिणस्यामेव प्रोक्तानि नान्यदिक्षु, तत्र किं नियामकम् इति ? प्रश्नोऽत्रोत्तरं—श्री भगवत्यां यल्लोकपालानां पृथक् पृथक् कृत्यानि दक्षिणस्यामेव प्रोक्तानि तन्मेरोरपेक्षया, न तु सौधर्मेन्द्रनिवासभूतविमानापेक्षया इति ॥ १९ ॥

तथा—कल्पकिरणावल्यां मरुदेव्यध्ययनं विभावयन् वीरः सिद्धिं गतः, तत्र मरुदेव्यध्ययनं कया रीत्या विभावितम्, तत्सम्यक् प्रसाद्यमिति ? प्रश्नोऽत्रोत्तरं—कल्पसूत्रावचूर्णौ मरुदेव्यध्ययनं विभावयन्-प्ररूपयन्नित्येव व्याख्यातमस्ति, न तु विभावनरीतिरिति ॥ २० ॥

तथा—पाक्षिकक्षामणाऽवसरे श्राद्धाः प्रत्येकं नमस्कारान् मनोमध्ये कथयेयुः किं वा नेति ? प्रश्नोऽत्रोत्तरं—क्षामणाऽवसरे यतिसद्भावे श्राद्धा नमस्कारं न पठन्ति, किन्तु यतिभिः पठ्यमानं क्षामणकपाठं शृण्वन्ति, यतीनामभावे तु नमस्कारं पाक्षिकसूत्रस्थाने प्रतिक्रमणसूत्रं च परम्परया पठन्तीत्यवसेयम् ॥ २१ ॥

# अथोपाध्यायश्रीसोमविजयगणिकृतप्रश्नास्तदुत्तराणि च

**यथा**—देवादिर्वैक्रियं कुर्वाणो यदैकेन्द्रियादिपञ्चेन्द्रियपर्यन्तं जीवरूपं करोति तदा निजात्मप्रदेशांस्तत्र प्रक्षिपति, एवमचेतनं स्तम्भादिपदार्थं विकुर्वाणस्तान् प्रक्षिपति न वा ? इति **प्रश्नोऽत्रोत्तरं**— अचेतनं स्तम्भादिपदार्थं विकुर्वाणो जीवप्रदेशान्न प्रक्षिपतीति ज्ञायते, यतो **जीवाभिगमे चतुर्थप्रतिपत्तौ** देवगत्यधिकारे—"सोहम्मीसाणदेवा किं एगत्तं पहू ! विउव्वित्तए ? पुहत्तं पहू विउव्वित्तए ?, " इत्यादिसूत्रे सम्बन्धाइंपि असम्बन्धाइंपि, इत्यत्रासम्बन्धाइंपीत्येतद्व्याख्यानेऽसम्बन्धान्यात्मप्रदेशेभ्यः पृथग्भूतानि प्रासादघटपटादीनीत्युक्तमस्तीति ॥ २२ ॥

**तथा**—पिण्डविशुद्धिविधाता जिनवल्लभगणिः खरतरोऽन्यो वा ? इति **प्रश्नोऽत्रोत्तरं**—जिनवल्लभगणेः खरतरगच्छसम्बन्धित्वं न सम्भाव्यते, यतस्तत्कृते **पौषधविधिप्रकरणे** श्राद्धानां पौषधमध्ये जेमनाक्षरदर्शनात्कल्याणकस्तोत्रे च श्रीवीरस्य पञ्चकल्याणकप्रतिपादनाच्च तस्य सामाचारी भिन्ना खरतराणां च भिन्नेति ॥ २३ ॥

**तथा**—जम्बूद्वीपे सर्वसङ्ख्यया षट्पञ्चाशत्सहस्राधिकचतुर्दशलक्षप्रमिता नद्यो **जम्बूद्वीपप्रज्ञप्तौ** प्रोक्तास्सन्ति, तत्र प्रत्येकमष्टाविंशति-सहस्रनदीपरिकरितानामन्तर्नदीनामगणने को हेतुरिति ? **प्रश्नोऽत्रोत्तरं**—अन्तर्नदीनां परिवारागणने **जम्बूद्वीपसंग्रहण्यादौ** चतुरशीतिसहस्रमितानां कुरुक्षेत्रनदीनामगणनमिव पूर्वाचार्याणामविवक्षैव हेतुः सम्भाव्यत इति ॥ २४ ॥

**तथा**—द्वादशव्रतपौषधिकानां चत्तारिअट्ठदसदसक्तपौषधिकानां चालोचनाप्रायश्चित्तप्रदानमुपधानानुसारेणान्यथा वेति ? **प्रश्नोऽत्रोत्तरं**—द्वादशव्रतपौषधिकादीना प्रायश्चित्तप्रदानं सामान्यतो जीवघातादौ यादृगापतति तदनुसारेण न तूपधानाद्यनुसारेणेति सम्भाव्यत इति ॥२५ ॥

तथा—भरतक्षेत्रसम्बन्धिमागधादितीर्थानि जगत्या अर्वाक् सन्ति लवणसमुद्रे वेति ? प्रश्नोऽत्रोत्तरं—भरतक्षेत्रसम्बन्धिमागधादितीर्थानि जगत्याः परतो लवणसमुद्रेऽवसीयन्ते, यतो **जम्बूद्वीपसमासे** भरतक्षेत्रवर्णनाधिकारे मागधवरदामप्रभासतीर्थद्वारमित्याद्युक्तमस्तीति ॥ २६ ॥

तथा—"**पणकोडि अट्ठसट्ठी, लक्खा नवनवइसहस्स पंचसया । चुलसीअहिआ रोगा, छट्ठे तह सत्तमे नरए"** ॥ १ ॥ इयं गाथा क्वास्ति ?, प्रथमादिनरकेषु च कियन्तो रोगास्सन्तीति ? प्रश्नोऽत्रोत्तरं—इयं गाथैतत्पाठरूपा ग्रन्थे दृष्टा न स्मरति, एतद्भावार्थरूपा तु वर्त्तते, यथा—" रोगाणं कोडीओ, हवंति पंचेव लक्ख अडसट्ठी । नवनवइसहस्साइं, पंचसया तहय चुलसीइं ॥ १ ॥ " एते रोगा अप्रतिष्ठाने नरकावासे नित्या अन्यत्रापि च सम्भवन्ति यथायोगं, ततश्च यस्मिन्नरभवे एतावन्तो रोगाः क्षयहेतवस्तस्मिन् धर्म एव सार इत्यादरणीयस्सर्वशक्त्येत्युपदेशरत्नाकरे पञ्चविंशत्यधिकैकशतपत्रमितपुस्तके एकाशीतितमपत्रे ॥ २७ ॥

तथा—सामायिकाध्ययनादीनां कान्युपधानानि धामस्थानां[1], परस्यानुयोजने किं प्रतिवचः प्रदीयत इति ? प्रश्नोऽत्रोत्तरं—महानिशीथादौ चैत्यवन्दनसूत्राणामेवोपधानान्युक्तानि सन्ति, न तु सामायिकाध्ययनादीना । यच्चोपधानमन्तरापि सामायिकादीना पठनं तत्र जीतव्यवहारः सम्प्रदायश्च प्रमाणं, यदुक्तं—" श्रावकाः पञ्चनमस्कारादि कियत्सूत्राणि विमुच्य शेषं सामायिकादि षड्जीवनिकान्तं सूत्रमुपधानमन्तरेण यत्पठन्ति यच्चाकृतोपधानतपसोऽपि प्रथमं नमस्कारादींस्तत्र जीतव्यवहारसम्प्रदायश्च प्रमाणमिति सम्भाव्यत इति **विचारामृतसंग्रहे** श्राद्धप्रतिक्रमणविचाररूपे षष्ठद्वारे इति ॥ २८ ॥

---

1 गृहस्थाना.

तथा—जिनानामन्तरेषु साधुविच्छेदे सति प्रत्येकबुद्धादिः केवली भवति न वा ?, यदि भवति तर्ह्यन्येषां धर्मं कथयति न वेति ? प्रश्नोऽत्रोत्तरं—तीर्थोच्छेदे प्रत्येकबुद्धादेः केवलित्वभवने साक्षादक्षराणि प्रवचनसारोद्धारवृत्त्यादौ दृश्यन्ते, परं परेषां धर्मकथने निषेधाक्षराणि ग्रन्थे दृष्टानि न स्मरन्तीति ॥ २९ ॥

तथा—समवसरणे तृतीयवप्रद्वारेषु द्वारपालमाश्रित्य " प्रतिवप्रं प्रतिद्वारं, तुम्बरुप्रमुखाः सुराः । दण्डिनो हि प्रतीहाराः, स्फारशृङ्गारिणोऽभवन् ॥ १ ॥ " इति वृद्धश्रीशत्रुञ्जयमाहात्म्ये । तथा—"द्वारेषु रौप्यवप्रस्य, प्रत्येकं तुम्बरुः स्थितः । नृमुण्डमाली खट्वाङ्गी, जटामुकुटभूषितः ॥ १ ॥ " इति श्रीशान्तिनाथचरित्रे ॥ तथा—" अन्यवप्रे प्रतिद्वारं, तस्थौ द्वास्थस्तु तुम्बरुः । खट्वांगी नृशिरः स्रग्वी, जटामुकुटमण्डितः ॥ १ ॥ " इति श्रीहैमवीरचरित्रे । तथा—तइय बहि सुरा तुम्बरु खट्टंगिकवालि जडमउडधारी । पुव्वाइदारवाला तुम्बरुदेवो अ पडिहारो ॥ १ ॥ इति 'थुणिमो केवलिवत्थं' इति स्तोत्रे इति मतान्तराणि दृश्यन्ते, तेन नवीनप्रारब्धसमवसरणे किंनामानः किमायुधाश्च प्रतीहारा विधीयन्ते ?, तथा प्रतिद्वारमेको द्वौ वेति व्यक्त्या प्रसाद्यमिति ? प्रश्नोऽत्रोत्तरं—नवीनप्रारब्धसमवसरणे समवसरणस्तोत्रानुसारेण प्रतीहाररूपाणि विधेयानि, प्रतिद्वारं च " बीए देविजुअला " इतिपदस्योपलक्षणपरत्वेन प्रतिहाररूपद्वयं समानायुधं भवतीति समवसीयत इति ॥३० ॥

तथा—चतुर्दशपूर्व्विणा जघन्यतोऽपि षष्ठदेवलोके उपपाताक्षराणि कुत्र सिद्धान्ते सन्तीति व्यक्त्या प्रसाद्यमिति ? प्रश्नोऽत्रोत्तरं—चतुर्दशपूर्व्विणां जघन्यतो लान्तकं यावद्गतिमाश्रित्य भगवतीवृत्तौ महाबलाधिकारे जिनभद्रगणिक्षमाश्रमणकृतबृहत्संग्रहणीसूत्रादौ च स्पष्टतया

तदक्षराणि दृश्यन्ते, यत्तु महानलस्य चतुर्द्दशपूर्व्विणः पञ्चमे कल्पे गतिरुक्ता तत्तु पूर्व्वविस्मृत्येति ऋषिमण्डलवृत्तौ, सिद्धान्ते त्वाहत्य दृष्टानि न स्मरन्तीति ॥ ३१ ॥

तथा—एकद्वित्र्यादिदिवससम्बन्धि साकारमनशनं " जइ मे हुज्ज पमाओ " इत्यादिगाथया कार्यतेऽन्यथा वा इति, यद्यनया गाथया तर्णस्गां तु दीर्घनिद्रासद्भावयेवाहारादित्यागो दृश्यते, अन्यथा त्वाहारोपध्यादेस्त्यजनमिति कथं सङ्गच्छते [1], यदि चान्यथा कार्यते स प्रकारः प्रसाद्य इति प्रश्नोऽत्रोत्तरं—' अन्नत्थणाभोगेणं ' इत्याद्याकारैः कृताहारादिप्रत्याख्यानस्य ' जइ मे हुज्ज पमाओ.' इत्यनया गाथयाऽनशनमुच्चार्यते, न तु केवलया गाथयेति ज्ञायते, एतद्विस्तरस्तु श्राद्धविधिवृत्तौ ' उपाकृत्याधिकारे वर्त्तत इति ॥ ३२ ॥

तथा—श्रीजिनालयादेश्चिन्ताकरणार्थं गृहवाटिक्षेत्रादीनां विद्यमानानां मोचनं तन्निश्रया युक्तिमत्प्रतिभाति, परं तन्निश्रया नवीनक्षेत्रादीनां निष्पादनं कथं युक्तमिति केचन प्रश्नयन्ति, तदुपरि ग्रन्थाक्षराणि यदि भवन्ति तदा प्रसाद्यानीति ? प्रश्नोऽत्रोत्तरं—विद्यमानगृहवाटीक्षेत्रादीनां मोचनमिव नवीनानामपि तेषां कारणे निष्पादनं द्रव्यक्षेत्रादिविचारणया नानुचितं प्रतिभाति, यथा जीर्णपाषाणेष्टकादीनामभावे नवीनानामपि तेषामुत्पादनं विधीयमानमास्ते, किञ्च—" तत्रानेकतडागादिवनश्रेणिविभूषितः । प्रासादो जगदीशस्य, चक्रे वर्द्धकिना महान् ॥ १ ॥ इति श्रीशत्रुञ्जयमाहात्म्येऽपि, तथा तत्रैव ग्रन्थे तत्तन्नद्यस्तत्तत्कुण्डानि तत्तदिन्द्रादिभिः कारितानीत्यक्षराणि स्पष्टतया सन्तीति ॥ ३३ ॥

तथा—मौलविधिनोपधाननहने श्राद्धया अस्वाध्यायदिनत्रयसत्कं तपः प्रवेदनं च लेख्यके समायाति नवेति प्रसाद्यं, पूर्व्वं तु तपो

१ रात्रि. २ तत्कारितगेनिष्पादितानां.

न यातीति श्रुतमस्तीति ? **प्रश्नोऽत्रोत्तरं**—अस्वाध्यायदिनत्रयसत्कं तपः प्रवेदनं च न यातीति वृद्धवादोऽत एव षोडशदिने वाचना प्रदीयमानाऽस्ति, वाचनानन्तरं च प्रवेदनरहितं पौषधत्रयं कार्यत इति ॥ ३४ ॥

**तथा**—सौधर्मादिदेवलोकेषु प्रतिप्रतरं सकलविमानानामाधारभूतैका भूमिरस्ति न वा ? इति **प्रश्नोऽत्रोत्तरं**—सकलविमानानामाधारभूतैका भूमिर्नास्तीत्यवसीयते, यतो **भगवत्यादौ** पृथवीप्रश्ने रत्नप्रभाद्य ईषत्प्राग्भारपर्यन्ता अष्टावेव पृथिव्य उक्ताः सन्ति न त्वधिका इति ॥ ३५ ॥

**तथा**—**स्थानाङ्ग**सूत्रपञ्चमाध्ययनद्वितीयोद्देशके ' राइभोअणं भुंजमाणे ' इत्यस्य वृत्तौ दिवागृहीत दिवाभुक्तमिति भङ्गकस्य कथं रात्रिभोजनता ? पर्युषितरक्षणादन्यथा वेति ?, **प्रश्नोऽत्रोत्तरं**—रात्रिभोजनचतुर्भङ्ग्यां दिवागृहीतं दिवाभुक्तमिति भङ्गकस्य पर्युषितरक्षितभक्षणेन रात्रिभोजनता ज्ञेया, हारिभद्र्यां **दशवैकालिकवृत्तौ पाक्षिकसूत्रवृत्तौ** च सन्निधिपरिभोगाधिकारे तथैव प्रतिपादनादिति ॥ ३६ ॥

**तथा**—मनुष्यः पशुर्वा देवलोकं गतस्सन् प्रायः सिद्धान्तादौ प्राग्भवसम्बन्धिनाम्ना व्यपदिश्यते, तत्र को हेतुः ?, देवलोके देवानां किं शाश्वतानि नामानि न सन्तीति ? **प्रश्नोऽत्रोत्तरं**—देवलोकं गतानां प्राग्भवसम्बन्धिनाम्ना (यो) व्यपदेशः सोऽत्रत्यानां सुखेन प्रतीत्यर्थोऽन्यथा देवलोकेऽपि विमानासनादिनिमित्तकानि शाश्वतानि नामानि सम्भवन्त्येवेति ॥ ३७ ॥

**तथा**—अत्र **योगविधि**प्रान्ते लिखितमास्ति यत्-'प्राभातिककालो वैरात्रिककालस्थाने स्थाप्यते' इत्यत्राकसन्ध्यादिकारणे एतत्स्थापनमन्यथा वेति ? **प्रश्नोऽत्रोत्तरं**—प्राभातिककालस्थाने वैरात्रिककालस्थापनमाकसन्ध्यादिकारणे सति गुर्वाज्ञया शुध्यति, **योगविध्यादौ** तथैव प्रतिपादनादिति ॥ ३८ ॥

**तथा**—' देवनैरयिकैरपि यदि षण्मासे शेषे आयुर्न बद्धं तत आत्मीयस्यायुषः षण्मासशेषं तावत्ताक्षिपन्ति यावतार्वाग्जनन्य आयुर्बन्धकाल

उत्तरकालश्चावशेषोऽवतिष्ठते, इह परभवायुर्देवनैरयिका बध्नन्तीत्ययमसङ्क्षेपकालः ' इति श्रीस्थानाङ्गषष्ठाध्ययनवृत्त्युपान्ते प्रोक्तमस्तीति, परं ' बन्धन्ति देवनारय असंखतिरिनर छमाससेसाउ ' इत्यादिवचसा कथं संवादः ? इति **प्रश्नोऽत्रोत्तरं**—बन्धन्ति देवनारयेत्यादिवचनं प्रायिकं, तेन केषाञ्चिद्देवनारकाणा शेषेऽन्तर्मुहूर्त्तेऽप्यायुर्बन्धो भवतीति मतान्तरं अवसीयते इति न कोऽपि विसंवाद इति ॥ ३९ ॥

**तथा**—**प्रज्ञापनातृतीयपदे** भवसिद्धिकद्वारे 'तेभ्योऽपि भवसिद्धिका अनन्तगुणाः, यतो भव्यनिगोदस्यैकस्याप्यनन्तभागकल्पाः सिद्धाः, भव्यजीवराशिनिगोदाश्चासङ्ख्येया लोके ' इत्यत्र निगोदानां भव्येतिविशेषणात्केवलभव्यजीवाश्रिता निगोदा अन्यथा वा ?, यदि केवलभव्याश्रिता निगोदा भवन्ति तर्हि केवलाभव्यजीवाश्रिता अपि ते भवन्ति न वेति ? **प्रश्नोऽत्रोत्तरं**—निगोदानां भव्येतिविशेषणं भव्यानां प्राधान्यख्यापनार्थं तेनाभव्या अपि तत्रैवान्तर्भवन्ति, न त्वभव्यानां पृथक् निगोदा उक्तास्सन्तीति ॥ ४० ॥

**तथा**—ऐशाने सौधर्म्मे ज्योतिश्चक्रे व्यन्तरनिकाये असुरादिनिकाये च प्रत्येकं देवेभ्यो देवीवर्गो द्वात्रिंशदधिकद्वात्रिंशद्गुण इति **प्रज्ञापनायां** महादण्डके प्रोक्तमस्ति, अन्यत्र तु ' तिगुणा तिरूवअहिआ ' इत्यादिवचनात्सर्व्वसुरेभ्यः सर्व्वदेवीवर्गो द्वात्रिंशदधिकद्वात्रिंशद्गुण इति, अत्रोत्तरं वचनं कथं संगच्छते ?, **प्रज्ञापनायां** सनत्कुमारादिदेवेभ्यो देवीनामधिकत्वाप्रतिपादनादिति **प्रश्नोऽत्रोत्तरं**—ईशानादिषु यद्देवापेक्षया देवीनां द्वात्रिंशदधिकद्वात्रिंशद्गुणत्वं तदीशानादिदेवभोग्यदेव्यपेक्षयाऽवगन्तव्यं, तेनाधिका अपि तत्र देव्यस्सम्भाव्यन्ते, ताश्च सनत्कुमारादिदेवापेक्षया गण्यमाना द्वात्रिंशदधिकद्वात्रिंशद्गुणा भवन्तीति न कश्चन **प्रज्ञापनोपाङ्ग**तिगुणातिरूवअहिअत्तिगाथोक्तभावार्थयोर्भेद इति ॥ ४१ ॥

**तथा**—जिनकल्पिकानामेकावतारित्वप्रघोषस्सत्योऽसत्यो वा ?, तथा तेषामेव वस्त्राभावे नाग्न्यदर्शनाभावसूचकाक्षराणि भवन्ति तदा प्रसाद्या-

नीति, प्रश्नोऽत्रोत्तरं—जिनकल्पिकानामेकावतारित्वप्रघोपमाश्रित्य तथा च तेषां वस्त्राभावे नाग्न्यदर्शनाभावमाश्रित्याक्षराणि तु शास्त्रे दृष्टानि न स्मरन्तीति ॥ ४२ ॥

तथा—उत्तरवैक्रियशरीरं सातिरेकलक्षयोजनप्रमाणं प्रोक्तमस्ति, परं तानि योजनानि कर्त्तुरात्माङ्गुलप्रमाणेनोत्सेधाङ्गुलप्रमाणेन प्रमाणाङ्गुलप्रमाणेन वा इति प्रश्नोऽत्रोत्तरं—उत्तरवैक्रियशरीरमुत्सेधाङ्गुलेन वाऽऽत्माङ्गुलेन वा प्रमाणाङ्गुलेन वा स्वशक्त्यनुसारेण भवत्वित्यत्र न कोऽप्याग्रह इति ॥ ४३ ॥

तथा—आवश्यकहारिभद्र्यां श्री हरिभद्रसूरिभिः श्रुतदेवतानमस्कारः प्रथमपद्येऽकारि, स साधूनां कथमुचितो ?, न चात्र श्रुतरूपा देवतेति वक्तुं युक्तं, प्रतिक्रमणहेतुगर्भे श्रुतदेवताया देवतारूपेण भावितत्वादिति ? प्रश्नोऽत्रोत्तरं—श्रुतस्य ज्ञानरूपत्वेन परममोक्षाङ्गत्वात् श्रुताधिष्ठातृदेवताया अपि स्मरणादिना स्थाने स्थाने कर्मक्षयहेतुत्वेनाभिहितत्वात् श्रुतोपकारकतया तन्नमस्कारोऽपि पूर्व्वाचार्यैराचीर्ण्ण इत्यत्राऽऽचरणैव प्रमाणमिति ॥ ४४ ॥

तथा—आत्मभिर्विधियमानः पञ्चशक्रस्तवैर्देववन्दनविधिः कुत्रापि ग्रन्थेऽस्ति परम्परागतो वा ?, यतः प्रवचनसारोद्धारादिग्रन्थे त्वन्यथा वर्त्तत इति, प्रश्नोऽत्रोत्तरं—आत्मभिर्विधियमानः पञ्चशक्रस्तवैर्देववन्दनविधिः कियान् योगशास्त्रवृत्तिसंघाचारवृत्त्याद्यनुसारेण कियांश्च परम्परयेति प्रवचनसारोद्धारादौ कियति भेदेऽपि न कोऽपि वितर्कः, तस्यापि सुविहिताचरितत्वात्, गणधरसामाचारीष्वपि क्रियाभेदाभ्युपगमाच्चेति ॥ ४५ ॥

तथा—एकस्मिन्निगोदेऽनन्ता जीवाः प्रतिसमयं प्रविशन्ति प्राक्तनाश्चानन्तास्तस्मान्निर्गच्छन्तीति प्रोक्तमस्ति, परमेवं गमनागमने सति स निगोदः कियत्कालं तिष्ठतीति, प्रश्नोऽत्रोत्तरं—यदि प्रज्ञापनावृत्त्यादौ प्रत्युत्पन्नवनस्पतीनामपि निर्लेपनं प्रत्यादिष्टं तदा सम्पूर्णनिगोदावस्थानकालस्येयत्ता वक्तुं कथं शक्यत इति ॥ ४६ ॥

तथा—'तिब्वारपनरगारस' इत्यादिगाथाऽनुसारेण तपोरूपं प्रायश्चितं दीयमानमस्ति, परमेता गाथाः कस्मिन् ग्रन्थे सन्तीति ? प्रश्नोऽत्रोत्तरं—'तिन्नारे'त्यादिगाथा ग्रन्थस्था दृष्टा इति न स्मृतिमियर्ति, किन्तु पारम्पर्यागताः छुटितपत्रस्था एवेति ॥ ४७ ॥

तथा—'वरकनकशङ्खविद्रुममरकतघनसंनिभं विगतमोहं' इत्यत्र जिनानां पञ्चापि वर्णा उक्तास्सन्ति, परं वर्त्तमानजिनानां सुवर्णवर्णः क्वचित्स्तोत्रादौ लिखितोऽस्तीति तेषां कथं पञ्चवर्णत्वं संगच्छत इति प्रश्नोऽत्रोत्तरं—'वरकनके'त्यादिगाथाया ये पञ्च वर्णास्तीर्थकृतामुक्ताः सन्ति ते यौक्तिका एव, यत्पुनर्वर्त्तमानजिनाना स्तोत्रादौ लिखितः सुवर्णवर्णः स साम्प्रतीनविहरमाणजिनापेक्षया भविष्यतीति ज्ञायते, यतः छुटितपत्रेषु विहरमाणजिनैकविंशतिस्थानके च श्रीसीमन्धरादीना विंशतेरपि तीर्थकृतामेक एव कनकवर्णो लिपीकृतो दृश्यत इति ॥४८॥

तथा—जिनवल्लभसूरिकृतप्राकृतालापकरूपदीपालिकाकल्पे लिखितमस्ति 'पडिमारूवो सावगधम्मो वुच्छिज्जिस्सइ' इति, तेन तत्रत्यपुस्तकेष्वयं पाठोऽस्ति न वा ? इति प्रश्नोऽत्रोत्तरं—जिनवल्लभसूरिकृत आलापकरूपो दीपालिकाकल्पो दृष्टो नास्ति, जिनप्रभसूरिकृतस्त्वत्रालापकरूप एव वर्त्तते, तत्र च 'पडिमारूवो सावगधम्मो वुच्छिज्जिस्सइ' इत्यक्षराणि सन्तीति ॥ ४९ ॥

तथा—उत्सर्प्पिणीकाले चरमतीर्थकृतस्तीर्थं कियत्कालं प्रवर्तिष्यत इति प्रश्नोऽत्रोत्तरं—पञ्चमांगे विंशतितमशतकेऽष्टमोद्देशे श्रीऋषभजिनकेवलपर्याय यावदुत्सर्प्पिणीकाले चरमतीर्थकृतस्तीर्थं प्रवर्तिष्यति इति उक्तमस्तीति ॥ ५० ॥

तथा—चतुरधिकद्विसहस्रमितयुगप्रधानाः सिद्धान्ते प्रोक्तास्ते साम्प्रतं क सन्तीति प्रश्नोऽत्रोत्तरं—साम्प्रत युगप्रधानाः सन्तीति ज्ञातं नास्ति, दृश्यन्तेऽपि च न, तेन तृतीयोदयात्प्रारभ्य ते भविष्यन्तीति ज्ञायते ॥ ५१ ॥

तथा—कृतानन्तवनस्पतिप्रत्याख्यानिना भूमिकूष्माण्डं तापादिव्यतिरेकेण शुष्कं वाऽऽर्द्रं वा कल्पते, किंवा श्राद्धविध्युक्तसंस्कृतार्द्रकवद् कल्प्यं ?, यतस्तद्वल्लीपत्राण्येवोर्ध्वं दृश्यन्ते फलानि भूमिगतान्येवेति **प्रश्नोऽत्रोत्तरं**—भूमिकूष्माण्डं सम्यक्तया शुष्कं सदनन्तवनस्पतिप्रत्याख्यानिनामौषधादि-कारणे ग्रहीतुं कल्पत इति व्यवहारो दृश्यते, परं तदातपं विना सम्पूर्णतया शुष्कं न भवतीति तत्स्वरूपविदो विदुरिति ॥ ५२ ॥

तथा—आवश्यकसूत्रवृत्त्यादौ जीर्णचरित्रादौ च केवलिनः समवसरणे समागत्य तीर्थं तीर्थकरं गणधरं नत्वा स्वपर्षदि समुपविशन्ति, वन्दारुवृत्तौ—

" गौतमस्तु जिनोपान्ते, ययौ यावद्विवन्दिषुः । प्रचेलुस्तेऽथ शालाद्यास्तावत्केवालिपर्षदि " ॥ १ ॥
ततस्तान् गौतमोऽवादीद्वन्दध्वं किं न भो ! विभुम् ? । स्वाम्यूचे केवलज्ञानभाजो माऽऽशातयैनकान् ॥ २ ॥ "

इति पक्षद्वये कः पक्षः पृच्छकस्य निरूपणीय इति ? **प्रश्नोऽत्रोत्तरं**—तीर्थकरं त्रिः प्रदक्षिणीकृत्य तीर्थप्रणामं च कृत्वा केवलिनः स्वपर्षदि व्रजन्तीति भावार्थकान्यक्षराण्यावश्यकवृत्त्यादौ सन्ति, यत्तु शालाद्या एवमेव स्वपर्षदि जग्मुः तत्तु चरितानुवादरूपं प्रवर्त्तकं निवर्त्तकं च न भवतीति ॥ ५३ ॥

तथा—केषुचिद्ग्रन्थेषु दानप्रदानात्पूर्वं लोकान्तिका देवास्तीर्थकृतां दीक्षाकालं ज्ञापयन्ति, षष्ठाङ्गे तु पूर्वं दानं तदनु तेषां विज्ञप्तिरित्यत्र को विशेष इति, **प्रश्नोऽत्रोत्तरं**—तीर्थकृतां लोकान्तिकदेवकृतसम्बोधनोत्तरकालं सांवत्सरिकदानप्रवृत्तिस्तदनन्तरं वा लोकान्तिकदेवकृतं सम्बोधनं भवतीति ज्ञायते, एतदक्षराणि तु हारिभद्र्यामावश्यकवृत्तौ महावीरदानाधिकारे सन्तीति ॥ ५४ ॥

तथा—लोकान्तिकदेवानां यथा 'पढमजुअलमि सत्त सयाणीति' सर्व्वेषां लोकान्तिकानां षष्ठाङ्गोक्तः 'पत्तेअं पत्तेअं नउहिं सामाणिअसाहस्सीहिं' इत्यादिपरिवारः ? किं वा विमानाधिपतेः ?, परं सामान्यतो लोकान्तिका देवा भगवन्तं विबोधयन्तीति दृश्यते न तु क्वापि तत्स्वामिन इति, तथा तत्परिवारभूतानां तेषामपि भवस्थितिः किं वा विशेषो वा ? इति प्रश्नोऽत्रोत्तरं—सप्ताधिकसप्तशतादीनां लोकान्तिकानां देवानां ज्ञाताधर्मकथाङ्गोक्तः सामानिकादिकः परिवारः प्रत्येकं सम्भाव्यते न त्वेकस्य विमानाधिपतेः, तत्प्रतिपादनं व्यक्तशास्त्राक्षरानुपलम्भादिति, तथा परिवारभूतानां देवाना भवस्थितिः पृथगुक्ता नास्तीति लोकन्तिकानामिव सम्भाव्यते, तत्त्वं तु सर्व्वविदो विदन्ति इति ॥ ११ ॥

तथा—श्रीकल्पसूत्रस्य स्थविरावलीप्रान्ते 'देवड्ढिगणिं नमंसामि' इतिगाथा पुस्तकारूढकालीना उत प्राक्कालीना ?, यदि पुस्तकारूढकालीना तर्हि देवर्द्धिगणिकृतत्वे स्वस्य नमस्करणमनुचितं, अन्यकृतत्वे तु सर्वा अपि स्थविरावलीगाथा अन्यकृताः कथं न भवन्ति इत्यारेका, यदि प्राक्कालीना तदाऽग्रेतनानां नमस्करणं कथमुचितमिति प्रश्नोऽत्रोत्तरं—इयं गाथा देवर्द्धिगणिक्षमाश्रमणशिष्येणान्येन वा पाश्चात्येन केनापि स्थविरेण कृतेति सम्भाव्यते, न चैव सर्व्वा अपि तत्कृताः सम्भावनीयाः, अनुपपद्यमानत्वाभावात्, गतिस्तु स्थितस्यैव चिन्तनीया प्रशमरतिवद्, यतः तत्राप्युमास्वातिवाचककर्तृतायां प्रान्तगाथाकदम्बकैः तन्नमस्कारो दृश्यते, तेन तदेवान्यकृतं ज्ञेयं, न च सम्पूर्णग्रन्थोऽपि, तत्र विप्रतिपत्तेरभावात्, ग्रन्थस्योमास्वातिवाचककृतत्वेन सुप्रतीतत्वादिति ॥ १६ ॥

तथा—अन्त्यदशपूर्वधरः सिद्धान्तपाठेषु सौस्थ्यं करोतीति प्रघोषस्याक्षराणि कुत्रापि ग्रन्थे सन्ति न वा ?, यदि सन्ति तर्हि भगवतीसूत्रे श्रीदेवर्द्धिगणिक्षमाश्रमणकृतत्वेन नन्दिसूत्रस्यानुवादः कथं सङ्गच्छते ?, अनार्थे केनन प्रश्नयन्तीति प्रश्नोऽत्रोत्तरं—अन्त्यदशपूर्वधरः सिद्धान्तपाठेषु

१ भविष्यति तदातनेष्वादर्शेषु प्रान्त्यभागो वाचकनमस्कारान्वित, पाठश्चायं 'प्रशमस्तेन येनासा' मित्यादिरूप श्रीहरिभद्रीयवृत्तिगतः सभाव्यते.

सौस्थ्यं करोतीति वृद्धप्रवादः सर्वदाऽपि वर्तते, तदक्षराणि तु हारिभद्र्यां दशवैकालिकवृत्तौ विचारामृतसङ्ग्रहे वा सन्ति, तथा च सति भगवतीसूत्रे देवर्द्धिगणिक्षमाश्रमणकृतनन्दीसूत्रस्यानुवादसांगत्यमाश्रित्यान्तिमदशपूर्वधरेण सिद्धान्तपाठेषु सम्बन्धपरावर्त्तादिरूपं सौस्थ्यं कृतं, सूत्रसङ्क्षेपस्तु देवर्द्धिगणिक्षमाश्रमणेन कृत इति सम्भाव्यते, विशेषस्तु तत्त्वविद्वेद्य इति ध्येयम् ॥ १७ ॥

तथा—शुष्कं लशुनं सचित्तं वाऽचित्तं वा श्रद्धीयते ?, यद्यचित्तं तर्हि तथाविधकारणे तदौषधं आर्पवर्गे कार्यते न वा ? इति, प्रश्नोऽत्रोत्तरं—शुष्कं लशुनमचित्तं सम्भाव्यते, तेन तथाविधकारणे आर्पवर्गस्यापि करणे ऐकान्तिको निषेधो नास्तीति मन्तव्यम् ॥ १८ ॥

तथा—सूक्ष्मनिगोदाना सामान्येन षट्पञ्चाशदधिकशतद्वयावलिकारूपमायुरुक्तमस्ति, तत्किं पर्याप्तस्यापर्याप्तकस्य वा ?, यदि पर्याप्तकस्य तर्ह्यपर्याप्तकस्य न्यूनं सम्भाव्यते, एतच्चायुक्तम्, एतस्मान्न्यूनस्यायुषः शास्त्रेऽनभिधानाद्, अथापर्याप्तकस्य, तर्हि पर्याप्तकस्याधिकं सम्भाव्यते नवा ? इति प्रश्नोऽत्रोत्तरं—जीवाभिगमप्रज्ञापनादौ सूक्ष्मनिगोदाना अपर्याप्ताना पर्याप्तानां च जघन्यतोऽप्युत्कर्षतोऽपि च क्षुल्लकभवग्रहणलक्षणविशेषं विनाऽन्तर्मुहूर्त्तस्थितेरभिधानात्तद्वृत्तौ च पर्याप्तान्तर्मुहूर्त्तापेक्षयाऽपर्याप्तान्तर्मुहूर्त्तस्य लघुतया भणनात्, क्षुल्लकभवग्रहणस्य च कर्मग्रन्थवृत्त्यादौ सर्वजीवाल्पजीवितत्वेन प्रतिपादनादेवमवसीयते—यत्सूक्ष्मनिगोदानामपर्याप्तानां षट्पञ्चाशदधिकद्विशतीमितावलिकाप्रमाणक्षुल्लकभवग्रहणरूपं सर्वजघन्यमायुः, उत्कर्षतस्तु किञ्चिदधिकमपीति । पर्याप्तानां तु जघन्यतोऽप्युत्कर्षतोऽपि च सुतरामधिकमेवेति, अनयैव च रीत्या पर्याप्तापर्याप्तस्थितिप्रतिपादकसूत्रमपि सुस्थं भवतीति ॥ १९ ॥

तथा—पर्युषितद्विदलपोलिकादिनिषेधविषये यदि परेषां दर्शनार्हग्रन्थगतान्यक्षराणि भवन्ति तदा प्रसाद्यानीति, प्रश्नोऽत्रोत्तर—बृहत्कल्पपञ्चमोद्देशकवृत्तिप्रान्ते पर्युषितपूपालिकादिषु लालासम्मूर्च्छनात्तद्धेतुका च साधूना संयमनिराधना प्रोक्ताऽस्ति, सा च लालाया जीवमयत्व-

मन्तरेणासम्भविनीत्यतः सा जीवमयीत्यत्रसीयते, ते च जीवा द्वीन्द्रिया इति वृद्धसम्प्रदायः, 'पूपलिकादिष्विति' तत्रादिशब्दाद्विदलादिकमपि

गृह्यते, तेन तत्रापि तेषामेव जीवानामुत्पत्तिरवसीयत इति ॥ ६० ॥

तथा—वैताढ्ये विद्याधरमेखलायां सम्प्रति साध्वादिचतुष्टयं सम्भाव्यते न वा? इति प्रश्नोऽत्रोत्तरं—वैताढ्यमेखलाया साध्वादिचतुष्टयं वाध-

काभावात् सम्भाव्यत इति ॥ ६१ ॥

तथा—'सथारुच्चारविहि' इत्यादिश्राद्धप्रतिक्रमणसूत्रस्य वृत्त्यादौ तथा आवश्यकवृत्त्यादौ च श्राद्धपञ्चमप्रतिमाऽधिकारे दिवैव

ब्रह्मचारी न तु रात्रावित्युक्ततया लिखितमास्ति, परमावश्यकवृत्त्यादौ तद्विलोक्यमानं नोपलभ्यते, तत्कथमिति प्रश्नोऽत्रोत्तरं—'दिअबंभचारि

राईपरिमाणकडे' इत्यक्षराणि आवश्यवृत्तौ सन्तीति ॥ ६२ ॥

तथा—भगवत्यामसुराद्यधिकारे "नदीसरं दीवं पुण गया य गमिस्सन्ती" त्युक्तमस्ति, तस्य कोऽभिप्रायो?, यतोऽसङ्ख्याततमे द्वीपे

तेषामवस्थानं जम्बूद्वीपे चाऽऽगमनमुक्तमस्तीति—प्रश्नोऽत्रोत्तरं अयमभिसन्धिः सम्भाव्यते—यदसुरादीनां देवानां तीर्थकृत्कल्याणकाद्यष्टाहिकोत्सवकर-

णादिकार्यार्थं गमने नन्दीश्वरं द्वीप यावदेव, न तु परतो, यत्त्वत्राऽऽगच्छतामितः प्रतिगच्छतां च तेषामध्वनि तत्तद्द्वीपासन्नतया गमनमागमनं वा

सम्भवति तदत्र न विवक्षितमिति ॥ ६३ ॥

तथा—'चंदे चंदे अभिवड्डिए अ' इत्यादिवर्षपञ्चात्मकस्य युगस्य साम्प्रतममुकः संवत्सरो वर्त्तत इति ज्ञातुं शक्यते न वा इति

प्रश्नोऽत्रोत्तरं—साम्प्रतं तृतीयोऽभिवर्द्धितः संवत्सरः प्रवर्त्तमानोऽस्तीति ज्ञायते, तथाहि— श्रीमहावीरस्य निर्व्वाणं द्वितीयचन्द्रसंवत्सरे कल्पसूत्रा-

दावुक्तमास्ति, संवत्सरश्च श्रावणादिः, यतः—"सावणवहुलपडिवए, बालवकरणे अभीइनक्खत्ते। सव्वत्थ पढमसमए, जुगस्स आइं विआणा-

हित्ति ॥ १ ॥" ज्योतिष्करण्डकप्रकीर्णकवचनादन्यूनपञ्चवर्षात्मकाना सर्व्वेषा युगानामादिभूतः श्रावण एव सम्भवति, तथा च सति तदवयवभूतस्य संवत्सरस्यापि श्रावणादिकत्वमेव सङ्गतिमङ्गतीति, तेन श्रीवीरनिर्व्वाणसंवत्सरसत्कश्रावणमासादारभ्य गणने चतुर्भिः संवत्सरैर्युगपरिसमाप्तिः, तदनन्तरं च पञ्चभिः संवत्सरैर्युगमिति गणनया षड्विंशत्यधिकचतुश्शतीमितानि युगानि व्यतिक्रान्तानि, तदानीं च चतुष्षष्ट्यधिकषोडशशतीमितो विक्रमसंवत्सरो व्यतीतः, ततोऽपि च ताभ्या द्वौ चन्द्रसंवत्सरावतीताविति गतश्रावणादारभ्य प्रवृत्तः साम्प्रतं तृतीयोऽभिवर्द्धितः संवत्सरः प्रवर्त्तमानोऽस्तीति विचार्यमाणं चेतस्यौचितीमञ्चति । यत्तु युगमध्ये पौष एव वर्द्धते तत्कथमेषमोऽब्दे आषाढो वृद्ध इति, तल्लौकिकटिप्पनानुसारेण सर्व्वेषां मासानां वृद्धिदर्शनात् मासवर्द्धनमनियतमिति न काप्याशङ्केति सम्भाव्यते, निश्चितिस्त्वत्रापि सर्वविद्वेद्येति ॥ ६४ ॥

तथा—योगशास्त्रवृत्तिगतवसुराजाधिकारे चारणश्रमणानां निशि गमनागमनं दृश्यते, अतो निशि चारणश्रमणा व्योम्नि गमनागमनं कुर्व्वन्ति न वा इति **प्रश्नोऽत्रोत्तरं**—चारणश्रमणा निशि व्योम्नि गमनागमनं कुर्व्वन्ति, **श्रीपार्श्वनाथचरित्रादावपि** तथैव दर्शनादिति ॥ ६५ ॥

तथा—सिद्धिशिलाया उपरि सिद्धव्यतिरिक्ता जीवाः सन्ति न वा ?, यदि सन्ति तदा के सन्तीति **प्रश्नोऽत्रोत्तरं**—एकेन्द्रिया जीवास्सन्तीति ॥ ६६ ॥

तथा—गंगानदी षष्ठारके रथपथप्रमाणा भविष्यति न वा ? **प्रश्नोऽत्रोत्तरं**—गंगा यथोक्तप्रमाणा भविष्यत्यन्यास्तु चतुर्द्दशसहस्रमिता नद्यः पृथिव्या भूयस्तरतापवत्त्वेन शोषं यास्यन्तीति **जम्बूद्वीपप्रज्ञप्तिवृत्ताविति** ॥ ६७ ॥

तथा—जम्बूद्वीपमध्ये चतुर्द्दशलक्षषट्पञ्चाशत्सहस्रमिताश्चेन्नद्यः, तदा महाविदेहमध्यविजयविभेदविधाय्यः षट् नद्योऽन्याः प्रतिवैताढ्यमध्यगोन्मग्नानिमग्नाऽभिधाना नद्यश्च सङ्ख्यामध्ये कथं नागता इति **प्रश्नोऽत्रोत्तरं**—अत्र पूर्व्वाचार्याणां विवक्षैव प्रमाणं, **जम्बूद्वीपसंग्रहणीकारेण** तु साधिकसप्तदशलक्षमिता नद्यो जम्बूद्वीपमध्ये संकलिताः सन्तीति ॥ ६८ ॥

तथा—अस्तंगते दिवानाथे जलं रुधिरतुल्यमन्नमामिषतुल्यमेतज्जिनागमे क्वापि वर्त्तते न वा ? इति प्रश्नोऽत्रोत्तरं—अस्तगते दिवानाथ इत्यादिकं पुराणोक्तं न त्वात्मीय, रात्रिभोजनदोषस्त्वात्मीयागमे महानेवोक्तोऽस्तीति ॥ ६९ ॥

तथा—चतुर्विंशतिदण्डकमध्ये भुवनाधिपानां दण्डकदशक प्रोक्तम्, अपरेषां व्यन्तरादिकानां दण्डक एकैकः प्रोक्तस्तत्र किं कारणमिति प्रश्नोऽत्रोत्तरं—अत्र सूत्रकृतां विवक्षैव प्रमाणमिति ॥ ७० ॥

तथा—केवलनन्दीयोगोद्वाही यदि देवान् वन्दापयति तदा शुद्ध्यति नवा इति प्रश्नोऽत्रोत्तरं—अत्र नन्दीयोगोद्वाहिनो योगादौ देववन्दापन शुद्ध्यत्युपधाने तु नेति ॥ ७१ ॥

तथा—दैवसिकप्रतिक्रमणे देववन्दनानन्तरं यानि चत्वारि क्षमाश्रमणानि दीयन्ते, तत्र प्रथमक्षमाश्रमणेन भगवन्निति कः सम्बोध्य वन्द्यते ?, तत्र तीर्थंकर इत्येके, धर्म्माचार्य इत्यन्ये, कश्चिच्च देवान् वन्दित्वा चतुरादिक्षमाश्रमणैः श्रीगुरून् वन्दत इति प्रतिक्रमणहेतुगर्भोक्तानुसारतो गुरुरेव वन्द्यो, गुरुस्तु यस्य पुरस्तात् प्रतिक्रमणादिकं विधीयमानमस्ति स इत्यभिदधातीत्यत्र कः पक्षो न्याय्य ? इति प्रश्नोऽत्रोत्तरं—प्रथमक्षमाश्रणेन तीर्थंकर धर्माचार्य च सम्बोध्य तद्वन्दनं विधीयत इति ॥ ७२ ॥

तथा—पौषधिकश्राद्धो द्वितीयदिने प्राभातिकप्रतिक्रमणे द्व्यशनादिप्रत्याख्यानमिवागामिविषयं देशावकाशिकमपि कस्मान्न कुरुते ?, अथ प्रत्याख्यातसावद्यव्यापारस्तदागामिविषयमपि न कुरुत इति नेत्तर्हि सामायिकस्थः कथं कुर्यादिति ? प्रश्नोऽत्रोत्तरं—अत्रार्थेऽव्यवच्छिन्नवृद्धपरम्परवै गतिर्न तु अन्याक्षरावगतिरिति ॥ ७३ ॥

तथा—" जइआ होही पुच्छा, जिणाण मग्गंमि उत्तरं तइआ । इक्कस्स निगोअस्स य, अणंतभागो अ सिद्धिगओ ॥ १ ॥ "

इत्येतद्वचः किं बादरनिगोदापेक्षिकमुत सूक्ष्मनिगोदापेक्षिकं ?, सूक्ष्मनिगोदापेक्षायामपि सांव्यहारिकसूक्ष्मनिगोदापेक्षिकत्वे व्यवहार-राशिमनुप्राप्ता अपि केचन जीवा न मुक्तिं कदाचिद्यास्यन्तीति महत्यनुपपत्तिः कथं निरस्येति ?, प्रश्नोऽत्रोत्तरं—एकस्य निगोदस्यानन्ततमो भागो मोक्ष गत इति सामान्येनोक्तमस्ति, न तु सूक्ष्मनिगोदस्य बादरनिगोदस्य वेति विवेकेन, परमुभयथापि न कश्चिद्विरोधो यतो व्यवहारराशिं प्राप्ताः सर्व्वे जीवा मोक्षं यान्तीति नियमो नास्ति, तथा च सति श्रीमदुद्भावितानुपपत्तिरप्यनवकाशेति ॥ ७४ ॥

तथा—श्राद्धः सामायिकं कुर्व्वन् ' दुविहं तिविहेणं ' इत्यादिना सावद्यव्यापारसम्बन्धिकरणकारणे एव निषेधयति न त्वनुमोदनं, तथा च सति सामायिकस्थोऽसौ सावद्यव्यापारं मनोवाक्कायानामन्यतरेण केनाप्यनुमोदयन् सामायिकं खण्डयति नवेति प्रश्नोऽत्रोत्तरं—सामायिकस्थः श्राद्धो मनोवाक्कायैः सावद्यव्यापारमनुमोदयन्नपि सामायिकं न खण्डयति, तद्विषयकविरतेरभावात्, यदि च नानुमोदयति तदा भूयो लाभमग् भवतीति ॥ ७५ ॥

तथा—षाण्मासिकयोगादौ दत्तिप्रत्याख्यानं कार्यते, तत्किं ' सपाणभोअणं पंचदत्तिअं आयंबिलं पच्चक्खाइ " इत्याचाम्लादिस्थाने पठ्यते, अथवा ' सपाणभोअणं पंचदत्तिअं एकासणं पच्चक्खाइ ' इत्येकाशनकादिस्थाने पठ्यते इति ? प्रश्नोऽत्रोत्तरं—' सपाणभोअणं पंचदत्तिअं पच्चक्खाइ इत्येवंरूपं प्रत्याख्यानं गुरुपरम्परया पठ्यमानमुपलभ्यते, न त्वन्यथेति ! ॥ ७६ ॥

तथा—गाङ्गेयभङ्गानां गतिचतुष्टयमाश्रित्य सर्व्वाग्रसंख्या अनया रीत्या तेषामयं लक्षतमो भेद इति च प्रसाद्यमिति प्रश्नोऽत्रोत्तरं—नरकगतौ सर्व्वप्रवेशनकेष्वसंयोगिकान् सप्त भङ्गान् रत्नप्रभादिगतद्विकादिसंयोगसत्कभङ्गैर्द्विप्रवेशनकादिगतद्विकादिसंयोगांश्च गणयित्वा यथाऽऽ-

यातभङ्गानेकीकृत्य भङ्गसर्वाग्रमानय, परं प्रतिप्रवेशनकं भिन्नं भिन्नं सर्वाग्रमायाति, प्रवेशनकभङ्गसम्बन्धस्तु न सम्भवतीति सम्भाव्यते, एवं गतित्रयमाश्रित्यापि यथासम्भव ज्ञेयं, किं चैतद्विषये भगवतीसूत्रवृत्त्योः करणं दर्शितं नास्ति, तेन लक्षतमो भङ्गो व्यक्त्या न लिखितुं शक्यत इति ॥ ७७ ॥

तथा—' अन्ने विंति इगेण ' इत्यादिभाष्यगाथावचूर्णौ गाथात्रयमस्ति, तदर्थः प्रसादनीय इति प्रश्नोऽत्रोत्तरं—चैत्यवन्दनायामेकं शक्रस्तवं तद्द्वयं च सुखोन्नेयं मनसि सम्प्रधार्य शक्रस्तवत्रयादिप्रतिपादनपरं गाथात्रयं भाष्यावचूर्णौ उक्तमस्ति, तस्यायमर्थः—ईर्यापथिकायाः पूर्वं वा प्रणिधानान्ते वा शक्रस्तवभणने 'द्विगुणचैत्यवन्दनान्ते वा इति' द्वितीयचैत्यवन्दनान्ते वा शक्रस्तवभणने त्रयः शक्रस्तवा भवन्ति, अत्रैकवार. देववन्दनसम्बन्धिशक्रस्तवद्वयं त्रिष्वपि पक्षेषु सम्बन्धनीयं, प्रसिद्धत्वाच्च गाथायां न सङ्गृहीतं, अथैकवारदेववन्दने शक्रस्तवद्वयमिति पूर्वं पश्चाच्छक्रस्तवाभ्या ते चत्वारो भवन्ति, द्विगुणितदेववन्दने द्विवारदेववन्दने वा पूर्वं पश्चाद्वा शक्रस्तवे सति चत्वार इति ॥ ७८ ॥

तथा—श्रीवज्रसेनशिष्याश्चन्द्रादयः स्थविरावल्यां कथं नोक्ताः ? अन्ये शिष्यास्तूक्ताः, ते त्वात्मपट्टावल्यां न सन्ति, तत्किं कारणं ? तत्परम्परा च कथं मिलतीति ? प्रश्नोऽत्रोत्तरं—यदा माथुरी वालभी चेति वाचनाद्वयं जातं, तदा स्थविरावल्या अपि पाठभेदो जातः सम्भाव्यते, ततः कस्याञ्चिद्वाचनायां केचित् श्रीवज्रसेनसूरिशिष्याः श्रीचन्द्रसूर्यादय उक्ता भविष्यन्ति, कस्याञ्चिच्च नेति, ततः परम्परा न त्रुट्यति, कथमन्यथाऽऽत्मीयपट्टावल्यनुक्रमेण पूर्वाचार्याः स्वस्वग्रन्थेषु तत्तदाचार्याणा नामान्यलिखन्, ते हि बहुश्रुताः पूर्वापरग्रन्थानविमृश्य न लिखन्तीति ॥ ७९ ॥

## अथ—महोपाध्यायश्रीभानुचन्द्रगणिकृतप्रश्नास्तदुत्तराणि च

यथा—सन्ध्याप्रतिलेखनाया पश्चाद्धर्मध्वजप्रतिलेखनं विधीयते, प्रभातप्रतिलेखनायां च पूर्वं, तत्र को हेतुरिति ? प्रश्नोऽत्रोत्तरं—ओघनिर्युक्तियतिदिनचर्यादिषु तथोक्तिरेव हेतुरिति ॥ ८० ॥

तथा—यस्य श्राद्धस्य प्रथमोपधानस्य वहनानन्तरं द्वादशाब्दानि जातानि सन्ति, द्वितीयस्य तु किञ्चिन्न्यूनानि, स प्रथममेवोपधानं पुनर्वहत्युत द्वे अपीति ? प्रश्नोऽत्रोत्तरं—यदि मनः स्थाने तिष्ठति तदा प्रथमं द्वितीयं च परावृत्य वहति, तदशक्तौ तु यस्य द्वादश वर्षाणि तत्परावृत्य वहतीति ॥ ८१ ॥

तथा—प्रत्यूषसमये स्थापनाचार्यजोलिकस्य स्थापनाचार्यप्रतिलेखनातः पूर्वं प्रतिलेखनं, सन्ध्यायां तु पश्चात्, तत्र को हेतुरिति ? प्रश्नोऽत्रोत्तरं—स्थापनाचार्यजोलिकस्य प्रातः सन्ध्यायां च पूर्वं पश्चाद्वा प्रतिलेखने शास्त्रे नियमो नास्तीति ॥ ८२ ॥

तथा—उपधानचतुष्टयस्य मालारोपणस्य चान्तरकालः कियानिति ? प्रश्नोऽत्रोत्तरं—मुख्यवृत्त्या प्रथमोपधानप्रवेशानन्तरं द्वादशवर्षातिक्रमे तच्चतुष्टयं गच्छति, तेन ततोऽर्वागेव मालारोपणं विधेयमिति ॥ ८३ ॥

तथा—चक्रवर्त्तिनो राज्याभिषेकादनु पुत्रो भवति न वेति ? प्रश्नोऽत्रोत्तरं—चक्रवर्त्तिनो राज्याभिषेकादनु पुत्रो भवतीति श्रीअजितचरित्रादौ प्रोक्तमस्तीति ॥ ८४ ॥

तथा—तीर्थङ्करा एकस्मिन् समये कति सिध्यन्तीति प्रश्नोऽत्रोत्तरं—एकस्मिन् समये उत्कर्षतः चत्वारस्तीर्थङ्कराः सिध्यन्तीति सिद्धपञ्चाशिकादौ उक्तमस्तीति ॥ ८५ ॥

# अथोपाध्यायश्रीविवेकहर्षगणिकृतप्रश्नास्तदुत्तराणि च

यथा—रात्रिभोजनप्रत्याख्यानवताऽन्नादिविषये रात्रिसिद्धदिवाभुक्तादिचतुर्भङ्ग्यां त्रिभङ्गी वर्ज्या तथा पक्वान्नेऽपि सा वर्ज्यैव नवा ?, आद्येऽन्नादिष्विव न तथा तत्र तद्व्यवहारोऽद्ययावत् तत्र किं निदानमिति ?, द्वितीये आरम्भसाम्येऽप्यन्नादिष्वेव तद्वर्ज्यता न पक्वान्नेष्विति किं ?, अथ जलश्लेषाभाव एव तत्र तद्दोषपरिहारनिदानम्, अत एव तस्य मासाद्यवधिकल्प्यता कालमानाद्यपीति चेत्तदा रात्र्युषितकल्प्यस्य करम्भादेरपि रात्रिसिद्धस्य किमकल्प्यताव्यवहारः ? तेनारम्भादिदूषणसाम्येऽप्यन्नपक्वान्नयो रात्रिसिद्धवर्ज्जनीयतायां पङ्क्तिभेदश्चेतः संशयाकुलमातनोतीति प्रश्नोऽत्रोत्तरं—रात्रिसिद्धदिवाभुक्तादिका सा शास्त्रे क्वापि दृष्टा नास्तीति तेन रात्रिभोजनप्रत्याख्यानवतां तामाश्रित्य वर्ज्यता का ?, कश्च पक्वान्नदृष्टान्तोऽपि ?, स्वयमेव सम्यक्तया पर्यालोच्यं, परं रात्रिरन्धने महानारम्भो भवतीति श्राद्धैस्तद्वारणार्थं स्वशक्त्या रात्रिरन्धनं वर्ज्जनीयं, न तु रात्रिभोजनप्रत्याख्यानभङ्गभयेन, ततो न कोऽपि पङ्क्तिभेदः, साधुमाश्रित्य तु दिवागृहीतरात्रिभुक्तादिका चतुर्भङ्गी शास्त्रे प्रोक्ताऽस्ति, न तु श्राद्धानाश्रित्येति ध्येयम् ॥ ८६ ॥

तथा—सन्धानक्षिप्तार्द्रनिम्बुकादेरार्द्रत्वाव्यपगमः कथं भवतीति ? प्रश्नोऽत्रोत्तरं—क्षारक्षिप्तार्द्रनिम्बुकादेर्वर्ण्णरसगन्धादिपरावृत्तावातपत्रयलग्नाभावेऽप्यनार्द्रता भवतीति वृद्धव्यवहारः ॥ ८७ ॥

तथा—पद्मचरित्रे लक्ष्मणस्य तुर्यपृथ्वीगमनमुक्तं, तत्र च परमाधार्मिककृतवेदना च 'सो अग्गिकुंडमज्झाओ' इत्याद्यन्त्यपर्वदशम-

गाथायां प्राक्तेः कथं सङ्गच्छते ? 'तिसु परमाहम्मिअकयावि' इत्यादिसङ्ग्रहणिगाथाया विसंवादादिति **प्रश्नोऽत्रोत्तरं**–'तिसु परमाहम्मिअकयावि' इति सङ्ग्रहणीवचः प्रायिकमिति न काप्यनुपपत्तिरिति ॥ ८८ ॥

**तथा**—**पद्मचरित्रे** जनन्या जैनरथकर्षणाभिग्रहाप्रातिदूननिर्गततापसाश्रमावस्थितजनमेजयनृपसुतामदनावल्यनुरागादि सकलचरित्रं हरिषेणचक्रिणः प्रोचे, **श्रीउत्तराध्ययनवृत्तिश्राद्धविध्यादौ** च महापद्मचक्रिचरित्रमिति कथमेतेषां सङ्गतिः ?, विचारणया तु रावणस्य तत्कारितप्रासादस्य दर्शनेन हरिषेणसांनिध्यमेव सङ्गतिमङ्गति, परमन्यपक्षे बहुग्रन्थसंमतिरिति बह्वारेका समुत्पद्यत इति **प्रश्नोऽत्रोत्तरं**—अत्र मतान्तरमवसीयत इति ॥ ८९ ॥

**तथा**—**पाण्डवचरित्रे** आश्विनसिताष्टम्यां कृष्णजन्मोक्तं नेमिचरितादौ लोकोक्तौ च श्रावणासिताष्टम्यामिति कथमनयोः सङ्गतिरिति ? **प्रश्नोऽत्रोत्तरं**—अत्रापि मतान्तरं ज्ञेयमिति ॥ ९० ॥

**तथा पाण्डवचरित्रे** जरासन्धसत्कहिरण्यनाभसेनानी भीमेन हतो **हैमीयनेमिचरितादौ** चानाधृष्टिसेनान्या हत इति कथं मिलतीति ? **प्रश्नोऽत्रोत्तरं**—अत्रापि मतान्तरमवसेयमिति ॥ ९१ ॥

**तथा**—साम्प्रतीनसकलेन्द्राणामेकावतारित्वप्रवादोऽस्ति, **पद्मचरित्रे** च शीतेन्द्रस्य तद्भवव्यतिरिक्ता अन्ये त्रयो भवाः प्रोक्तास्सन्तीति **प्रश्नोऽत्रोत्तरं**—साम्प्रतीनाः सर्वेऽपीन्द्रा एकावतारिण एवेत्यक्षराणि दृष्टानि न सन्तीति ॥ ९२ ॥

**तथा**—**पाण्डवचारित्रे** षोडशसर्गेऽष्टादशश्लोके 'छेकेभ्यस्तादृशाः स्त्रिय' इत्यत्र तादृशा इतिशब्दे आप्प्रत्ययः कथमानीतः?, टक्प्रत्ययस्या-

ागमने ईप्प्रत्ययस्यैवोक्तत्वादिति, प्रश्नोऽत्रोत्तरं—टक्प्रत्ययान्तात्तादृशशब्दीप्प्रत्ययभावेऽपि तादृश इति क्विबन्ताद्वागुर्याचार्यमतेनाप्प्रत्ययागमे रूपसिद्धिरिति न कोऽपि दोष इति ॥ ९३ ॥

तथा—रक्तश्वेतसैन्धवयोरचित्तत्वे कथं पङ्क्तिभेद इति प्रश्नोऽत्रोत्तरं—श्राद्धविध्युक्तरक्तश्वेतसैन्धवयोर्यद्येकोत्पत्तिस्थानकत्वं तदा सचित्तत्वं समानमेव, परमाचरणया श्वेतः सैन्धवो योऽचित्तत्वेन व्यवह्रियमाणोऽस्ति न रक्त इति, किञ्च रक्तश्वेतयोरप्येकमेवोत्पत्तिस्थानमित्यपि नियमो ज्ञातो नास्ति, आसन्नखन्युद्भवस्यापि रक्तस्य सम्भवादिति ॥ ९४ ॥

तथा—जिनालये जिनदृष्टौ स्वस्य तिलके क्रियमाणे किं पटान्तरं क्रियते नवा इति ? प्रश्नोऽत्रोत्तरं—अत्र पटान्तरं विना तिलकं न क्रियत इत्यक्षराणि न सन्तीति ॥ ९५ ॥

तथा—श्राद्धाः प्रतिक्रमणं कुर्वाणा वन्दनकदानावसरे किं मुखवस्त्रिकां शुद्धभूमौ मुञ्चन्ति ? किमुत पादप्रोञ्छनोपरि मुखवस्त्रिकां मुक्त्वा वन्दनकानि ददतीति ? प्रश्नोऽत्रोत्तरं—प्रतिक्रमणं कुर्वाणाः श्राद्धा वन्दनकदानावसरे मुखवस्त्रिकां शुद्धभूमौ रजोहरणोपरि वा मुञ्चन्ति नान्यत्रेति विधिरिति ॥ ९६ ॥

तथा—काञ्जिकजलमभक्ष्यमिति कथमुपोषितस्य कल्पत इति ? प्रश्नोऽत्रोत्तरं—आरनालापरपर्यायं काञ्जिकजलं यद्यन्यान्यदिने तत्रोष्णावश्रावणक्षेपः कृतो भवति तदाऽभक्ष्यं न भवति, तेनोपोषितस्य साधोः शुद्धोष्णजललाभ उक्तत्वात्कल्पते, राजिकादिसम्पृक्तं तु नेत्येवमवश्रावणमप्युक्तत्वात्कल्पते, तस्याहाररूपता तु न भवति, तदभिप्रायाभावादिति ॥ ९७ ॥

तथा—'तेणं तीता अद्धा, अणागयद्धा अणंतगुणा' इत्यनया गाथयाऽतीताद्धामपेक्ष्यानागताद्धाया अनन्तगुणत्वं भगवत्यां च

तस्यास्तदपेक्षया समयातिरिक्तत्वं तत्कथमिति ? **प्रश्नोऽत्रोत्तरं—भगवतीवृत्तौ १२ शतके २ उद्देशके** जयन्तीप्रश्नाधिकारे ' जयन्ति ! तीताणागयाओ अद्धाओ दोऽवि तुल्लाओ ' इत्यनेनातीताद्धाया अनागताद्धायाश्च समत्वोक्तौ यत्पुनरिदमुच्यते अतीताद्धातोऽनागताद्धाऽनन्तगुणेति तन्मतान्तरमवसीयते, यच्चानागताद्धायाः समयातिरिक्तत्वं तद्वार्त्तमानिकसमयापेक्षयोक्तं, तदनपेक्षायां तूभयोः समत्वम्, अथो (त्रो) भयोः समत्वोपपत्तिरनागताद्धाया अनन्तगुणो (णत्वो) पपत्तिश्च तत एवावसेये इति ॥ ९८ ॥

**तथा—निशीथचूर्ण्यावश्यकचूर्णिपर्युषणाकल्पचूर्णयः** किंकालीनैः कैः कीदृशैः कियत्श्रुतैश्चाचार्यैः प्रणीतास्सन्तीति ? **प्रश्नोऽत्रोत्तरं**—एतासां चूर्णीनां मध्ये निशीथचूर्णिकर्त्तुरभिधानं **जिनदासगणिमहत्तर** इति तत्प्रान्ते प्रोक्तमस्ति, परमपरासां चूर्णीनां कर्तुरभिधानं कालनैयत्यं च नोपलभ्यत इति ॥ ९९ ॥

**तथा—निशीथचूर्ण्यादीनां** प्रामाण्यव्यवस्थापने ' निक्खोभा निक्कंपा ' इत्यादिसमवायाङ्गवृत्त्येकदेश एव शरणमुतान्यदप्यस्तीति ? **प्रश्नोऽत्रोत्तरं—निशीथचूर्ण्यादीनां** प्रामाण्यं तु बहुपु चिरन्तनग्रन्थेपु सम्मतिदर्शनादविगानमेवेति ॥ १०० ॥

**तथा**—व्यवहारचूलिका किंकर्तृकेति ? **प्रश्नोऽत्रोत्तरं**—साऽमुककर्तृकेति ज्ञातं नास्तीति ॥ १०१ ॥

**तथा**—" उदयंमि जा तिही सा, पमाणमिअराइ कीरमाणीए । आणाभंगऽणवत्था, मिच्छत्त विराहणं पावे " ॥ १ ॥ इति वृद्धसम्प्रदायगाथां ' क्षये पूर्वा तिथिः कार्या ' त्याद्युमास्वातिवाचकप्रणीतश्लोकं चानभ्युपगच्छनः प्रसह्य तदर्थप्रामाण्याङ्गीकारणे किञ्चिद् युक्त्यन्तरमप्यस्ति नवेति ? **प्रश्नोऽत्रोत्तरं**—' उदयंमि जा तिही सा ' ' क्षये पूर्वा तिथिः कार्या ' एतयोः प्रामाण्यविपये **श्राद्धविधिः** सुविहिताविच्छिन्न-

परम्परा न प्रमाणमिति ज्ञातमस्ति, तथा " आदित्योदयवेलाया, या स्तोकापि तिथिर्भवेत् । सा सम्पूर्णेति मन्तव्या, प्रभूता नोदयं विना ॥ १ ॥

इति पारासरस्मृत्यादावप्युक्तमस्तीति ॥ १०२ ॥ ... तत्सेवनं कल्पते न वेति ? प्रश्नोऽत्रोत्तरं—श्राद्धानां पञ्चदशकर्मादाननिषेध

तथा—भगवत्यां श्राद्धानां पञ्चदशकर्मादाननिषेधे प्रोक्ते तत्सेवनं कल्पते न वेति ? प्रश्नोऽत्रोत्तरं—श्राद्धानां पञ्चदशकर्मादाननिषेध

औत्सर्गिको ज्ञेयः, अपवादपदे तु परिहाराशक्तौ शकटालादीनामिव तानि कल्पन्तेऽपीति ॥ १०३ ॥

## अथ उपाध्यायश्रीविजयराजगणिकृतप्रश्नास्तदुत्तराणि च ।

यथा—शक्रादयो देवाः सम्भोगं कर्त्तुकामा देवलोकविमाने देवीभिः परिचारणां कुर्व्वन्ति विमानादन्यत्र वा ? तदाश्रित्य प्रसाद्यमिति

प्रश्नोऽत्रोत्तरं—शक्रादयो देवा देवलोके स्वस्वसुधर्मसभायां देवीभिः सह परिचारणां न कुर्व्वन्ति, तत्र माणवकचैत्यस्तम्भसमुद्गकस्थितजिनदंष्ट्रा-

शातनाभयादित्यभिप्रायः प्रज्ञप्तिदशमशतकपञ्चमोद्देशकेऽस्तीत्युपलक्षणत्वादन्यत्र—सिद्धायतनव्यतिरिक्तस्थाने परिचारणां कुर्व्वन्तीति सम्भाव्यत

इति ॥ १०४ ॥

तथा—श्रीमदुत्तराध्ययनप्रथमाध्ययने ऊर्ध्वरथिकशब्दो रूढो यौगिको वेति प्रश्नोऽत्रोत्तरं—ऊर्ध्वरथिकशब्दोऽन्वर्थव्युत्पत्तिरहितत्वेन

हैमव्याकरणानुसारेण रूढो 'नाम च धातुज'मिति शाकटायनमतेन तु सर्व्वनाममध्यपतितत्वेन यौगिकोऽपि च भिक्षाचरवाचको-

ऽस्तीति ज्ञायत इति ज्ञेयम् ॥ १०५ ॥

तथा—द्रुमपत्रकाध्ययने आजंजवीभावशब्दोऽस्ति तदर्थः प्रसादनीय इति ? प्रश्नोऽत्रोत्तरं—' आजंजवीभावः सातत्यभवने ' इति सिद्धा-

न्तविषमपदपर्यायपुस्तकेऽस्ति, लिङ्गानुशासनविवरणे तु संसारपर्यायतया ज्ञातोऽस्तीति ॥ १०६ ॥

# अथ उपाध्यायश्रीधर्मविजयगणिकृतप्रश्नास्तदुत्तराणि च।

**यथा**—श्रीतीर्थकृतां पूर्वभवसङ्ख्यानं किं प्राथमिकसम्यक्त्वलाभापेक्षिकमुत सम्यक्त्वलाभमात्रापेक्षिकं ?, प्राच्यपक्षे श्रीऋषभदेवस्य, त्रयोदश भवाः कथं सङ्गच्छन्ते? यतो भगवतः श्रीयुगादिदेवस्य धनसार्थवाहभवात्प्राक् प्रथमसम्यक्त्वलाभस्तदनन्तरं चानन्तः कालोऽगमत्, अन्यथैकसामयिकोत्कृष्टसङ्ख्याकसिद्धान्तःपातिता भगवतो न स्यात्, तथा चोक्तं नन्द्यध्ययनटीकायामुत्कृष्टद्वारे—'येषां सम्यक्त्वपरिभ्रष्टानामनन्तः कालोऽगमत् तेषामष्टोत्तरं शतं सङ्ख्यातकालपतितानां च दशकं दशकं अप्रतिपतितसम्यक्त्वानां च चतुष्टयं, यदुक्तम्—"जेसिमणंतो कालो, पडिवाओ होइ तेसि अट्ठसयं। अप्पडिवडिए चउरो, दसगं दसगं च सेसाणं" ॥ १ ॥ इत्यादि। द्वितियपक्षे तु श्रीऋषभदेवस्यान्येषामपि च तीर्थकृतां यथोक्तैव भवसङ्ख्या कुत ?, अन्तराऽपि सम्यक्त्ववान्तेः प्राप्तेश्च जातत्वादिति, **प्रश्नोऽत्रोत्तरं**—' समत्तपढमलंभो, बोद्धव्वो वद्धमाणस्स ' इत्याद्यावश्यकनिर्युक्त्यादिवचनानुसारेण श्रीवीरस्य तत्समानपङ्क्तिपतिततया चापरेषामपि तीर्थकृतां प्रथमसम्यक्त्वलाभापेक्षया भवगणनं ज्ञायते। या तु तत्र श्रीऋषभसिद्धिमाश्रित्य विप्रतिपत्तिः सा निरुपक्रमायुषोऽपि बाहुबलेः षड्लक्षपूर्वायुरुपक्रमणवदुत्कृष्टावगाहनासिद्धैकसामयिकाष्टशतसिद्धाश्चर्य एवान्तर्भावेन निराकरणीयेति सर्वं सुस्थमिति ॥ १०७ ॥

**तथा**—तीर्थकृन्मातरश्चतुर्दशसु स्वप्नेषु दशमस्वप्ने पद्मसरः पश्यन्ति, तत्किं पद्मोपलक्षितसरोवरमात्रमुत मानससरोवरवत्पद्मसरोऽपि द्वीपान्तरे क्वाप्यस्तीति **प्रश्नोऽत्रोत्तरं**—पद्मैरुपलक्षितं सरः पद्मसर इति व्याख्यातमस्ति, द्वीपान्तरे तु तन्नामकं सरो नास्तीति ॥ १०८ ॥

**तथा**—श्रीस्थूलभद्रः कोशागृहावस्थितावाहारमपि तदीयं गृहीतवानिति जनप्रवादः, परं शय्यातरपिण्डत्वेन कथं न जनप्रवाद-

विबन्धनमिति ? प्रश्नोऽत्रोत्तरं-श्रीस्थूलभद्रस्य कोशागृहेऽवस्थितिरागमव्यवहार्यनुज्ञातत्वेन यथा नानुचिता तथा शय्यातरपिण्डग्रहणमपि ज्ञेयं, ते हि सातिशयज्ञानवत्तया त्रैकालिकहितं विमृश्यैव सर्व्वमप्यनुजानन्त इति ॥ १०९ ॥

तथा—प्रज्ञापनोपाङ्गे प्रथमपदे ' से किं तं उरपरिसप्पथलयरपंचिंदिअतिरिक्खजोणिआ ?, २ चउव्विहा पन्नत्ता, तजहा—अही अयगरा आसालिआ महोरगा ' इत्यादि अत्राऽऽसालिकाया उरःपरिसर्प्पतामुक्त्वाऽनुपदमेव ' से किं तं आसालिआ ' इत्यादि तन्निर्देशसूत्रे ' जहन्नेणं अंगुलस्स असंखेज्जभागमेत्ताए ओगाहणाए उक्कोसेणं बारसजोअणाइ ' मित्यादिना तस्या एवोत्कर्पतो द्वादशयोजनानि देहमानमुक्तमिति कथं सङ्गच्छते ?, यतस्तत्रैवैकविंशतितमे अवगाहनाख्ये पदे सम्मूर्च्छिमोरःपरिसर्पाणामुत्कर्पतो योजनपृथक्त्वमेवावगाहनामानं प्रत्यपादि, यथा—एवं उरपरिसप्पाणवि ओहिअगब्भवक्कंतिअपज्जत्तयाणं जोअणसहस्सं संमुच्छिमाणं जोअणपुहत्त'मित्यादीति, प्रश्नोऽत्रोत्तरं—अवगाहनाख्ये पदे यदुरःपरिसर्प्पाणामुत्कर्पतो योजनपृथक्त्वं देहमानमुक्तं तत्प्रायिकमिति ज्ञायते, तेनाऽऽसालिकायाश्चक्रवर्त्त्यादिकटकस्य विनाशे समुपस्थिते कदाचित्कतयोत्पत्तेरुत्कर्पतो द्वादशयोजनानि तद्देहमानं पृथगुच्यमानं विरोधकृन्न भवति । यद्वा ' योजनपृथक्त्व ' मित्यत्र पृथक्त्वशब्दो जातिवाची, तेनैकवचननिर्देशेऽपि व्यादीनि पृथक्त्वानि ज्ञेयानि, तथा च सति न काप्यनुपपत्तिसम्भाव्यते, तत्त्वं तु सर्व्वविद्वेद्यमिति, एवं च सूत्रमध्ये एकवचननिर्देशेऽपि जातिपक्षाङ्गीकरणेन बहुपृथक्त्वग्रहणव्याख्या दिवसमुहुत्तपुहुत्तेत्यत्र सङ्ग्रहणीवृत्तिकारेणापि कृताऽस्तीति ॥ ११० ॥

तथा—अन्यच्च तानि द्वादशयोजनानि किमङ्गुलघटितानीति ? प्रश्नोऽत्रोत्तरं-योजनान्यात्माङ्गुलरूपाणि ज्ञेयानि, भिन्नाभिन्नकालभाविचक्रवर्त्त्यादिकटकविपये द्वादशयोजनरूपस्याऽऽसालिकादेहमानस्य समकक्षतया योजनोपपत्त्यर्थमिति ॥ १११ ॥

॥

तथा—श्रीस्थापनाचार्यपुरस्तादिव श्रीजिनप्रतिमापुरस्तादप्यविशेपतः सर्वा अपि प्रतिक्रमणादिक्रियाः कृताः शुद्धयन्त्युत कश्चिद्विशेप इति ? प्रश्नोऽत्रोत्तरं—कश्चिद्विशेषो ज्ञातो नास्ति, परं तासां करणं तु यथार्हमेवेति ॥ ११२ ॥

तथा—ये परपक्षिणस्तेषु चारित्रमस्ति नवा ? इति, प्रश्नोऽत्रोत्तरं—परपक्षिषु भगवदाज्ञाविरुद्धकर्तृकत्वाद्भावचारित्राभावः परं निश्चयस्तु केवलिगम्य इति ॥ ११३ ॥

तथा—निर्युक्तिकर्त्तारः पूर्वधरा भवन्त्यन्ये वेति ? प्रश्नोऽत्रोत्तरं निर्युक्तिकारिणश्चतुर्दशपूर्विदो भवन्तीति ज्ञायत इति ॥ ११४ ॥

तथा—इन्द्रविमाने त्रायस्त्रिंशास्सामानिकाश्च तिष्ठन्त्युत पृथग्विमानेष्विति ? प्रश्नोऽत्रोत्तरं—'तायत्तीसाण उ कंचणाइं सामाणिआण सयकंता। पत्तेअ विमाणा दक्खिणेण कप्पेसु तिसु होंति ॥ १९ ॥ व्याख्या-त्रायस्त्रिंशानां पितृव्यादिमहत्तरस्थानीयदेवानां काञ्चनानि सामानिकानामिन्द्रसमानरूपाऽऽयुष्कादिगुणग्रामाणां देवविशेषाणामेव शतकान्तानि—शतकान्तरत्नमयानि प्रत्येकं विमानानि, एकैकस्य त्रायस्त्रिंशस्य विमानमित्यर्थः, दक्षिणेन—दक्षिणस्यां दिशि व्यवस्थितेषु देवलोकेषु त्रिषु—सौधर्मसनत्कुमारब्रह्मलोकनामसु भवन्ती' ति देवेन्द्रनरकेन्द्रकसूत्रवृत्तौ, एतदक्षरानुसारेण त्रायस्त्रिंशानां सामानिकानां च विमानानीन्द्रविमानात्पृथक् पृथक् सन्तीति ॥ ११५ ॥

तथा—जघन्यपदे एकोनत्रिंशदङ्केभ्य एकोऽप्यङ्कोऽधिको भवति नवेति ? प्रश्नोऽत्रोत्तरं चतुर्थकर्मग्रन्थे ' अहक्खायसुहुमकेवले ' त्यादिगाथाव्याख्याने ये एकोनत्रिंशदङ्का लिखितास्सन्ति तत्प्रमाणा जघन्यपदे गर्भजमनुष्या भवन्ति, [ श्री अजितवृत्तिविधया ] न त्वेकोऽप्यङ्क एकोनत्रिंशदङ्केभ्योऽधिको भवतीति तात्पर्यमिति ।। ११६ ॥

तथा—चक्रिणां चक्रादिसप्तरत्नान्येकजीवात्मकान्यसङ्ख्यजीवात्मकानि वा ?, तथैषामागतिरुक्ता सा एकजीवमाश्रित्य नेकान्नेति ?

**प्रश्नोऽत्रोत्तरं**—चक्रिणां चक्रादिसप्तरत्नान्यसङ्ख्येयजीवरूपाणि, दृश्यमानपृथ्वीपिण्डस्यासङ्ख्येयजीवात्मकत्वात्, तथा आगतिरप्यसङ्ख्यानाश्रित्येति सम्भाव्यत इति ॥ ११७ ॥

**तथा**—'संभिन्नलोगनालिं, पासंति अणुत्तरा देवा' इत्यत्र संभिन्नशब्दार्थः कश्चित्पूर्णार्थः कश्चिचोनार्थः, तत्र किं तत्त्वमिति ? **प्रश्नोऽत्रोत्तरं**—संभिन्नशब्दो मुख्यवृत्त्योनार्थो, यत्तु क्वापि पूर्णार्थस्तत्राप्यल्पस्याविवक्षणादूनार्थ एव ज्ञेय इति ॥ ११८ ॥

**यथा**—नारकिणां योजनावधिरुक्तः, तद्योजनं केनाङ्गुलेन मीयत इति ? **प्रश्नोऽत्रोत्तरं**—देवानामिव नारकिणामप्यवधिज्ञानं प्रमाणाङ्गुल-योजनेन मीयत इति ज्ञायत इति ॥ ११९ ॥

**तथा**—यतित्वे पूर्वकलेवरादि व्युत्सृष्टं, तन्नियमो मृते महाव्रतवद्याति नवेति ? **प्रश्नोऽत्रोत्तरं**—महाव्रतवत्तन्नियमो याति, परं पूर्वशरीरस्य व्युत्सृष्टत्वेन क्रिया त्वविरतिर्न लगतीति ॥ १२० ॥

**तथा**—राजप्रश्नीये सूर्याभभवनेऽनेकपक्षिणस्तथा भृङ्गादिजीवा उक्ताः स्थानपदे च ते निषिद्धास्तत्र किं तत्त्वमिति ? **प्रश्नोऽत्रोत्तरं**—राजप्रश्नीयोक्ताः भृङ्गादिजीवाः पृथ्वीपरिणामरूपा ज्ञेयाः, ये तु स्थानपदे निषिद्धास्ते त्रसरूपा इति ॥ १२१ ॥

**तथा**—द्रव्यलिङ्गी जानानो यदि स्वयं महाव्रतीभूय विहरति तदाऽऽराधको भवति नवेति ? **प्रश्नोऽत्रोत्तरं**—गुर्वादिसामग्र्यभावे यदि स्वयं महाव्रतीभूय विहरति तदाराधकोऽन्यथा तु नेति ॥ १२२ ॥

**तथा**—मांसादौ द्विदलादौ च तक्रयोगे जीवा उत्पद्यमाना उक्तास्ते द्वीन्द्रिया अन्ये वेति ? **प्रश्नोऽत्रोत्तरं**—मांसादौ तद्योनिका निगोदरूपा

योगशास्त्रवृत्त्यादावुक्ताः, निगोदजीवास्त्वेकेन्द्रियास्सम्भवन्ति, उपदेशमालावृत्त्यादौ च सम्मूर्च्छिमपञ्चेन्द्रिया अप्युक्तास्सन्ति, तथा द्विदले तक्रादियोगे दध्नि च श्राद्धप्रतिक्रमणवृत्त्यादौ तु त्रसजीवोत्पत्तिरुक्ताऽस्ति, तेन ते दध्यासन्नत्वेन द्वीन्द्रियास्सम्भाव्यन्त इति ॥ १२३ ॥

तथा—मनुष्यलोकाद्बहिः क्वचिद्रात्रिरेव क्वचिद्दिवैव, तत्र कालप्रत्याख्यानं रात्रिभोजनप्रत्याख्यानं च घटते नवेति प्रश्नोऽत्रोत्तरं—मनुष्यलोकाद्बहिः कालप्रत्याख्यानं रात्रिभोजनप्रत्याख्यानं चेहत्यापेक्षया सम्यक्कालस्वरूपपरिज्ञाने भवत्यन्यथा तु सङ्केतप्रत्याख्यानमिति ॥ १२४ ॥

तथा—शय्यासंस्तारकयोः कश्चिद्भेदोऽस्ति नवेति ? प्रश्नोऽत्रोत्तरं—शय्या सर्वाङ्गिकी संस्तारकोऽर्द्धतृतीयहस्तप्रमाणोऽनया रीत्याऽनयोर्भेदः अथवा शय्यैव संस्तारकः शय्यासंस्तारक इत्याचाराङ्गवृत्त्यनुसारेणाभेदोऽपीति ॥ १२५ ॥

यथा—‘ पुव्वसिज्जायरी जयंती ’ त्यत्र पूर्व्वशय्यातरीशब्दस्यार्थः प्रसाद्य इति प्रश्नोऽत्रोत्तरं—अपूर्व्वसाध्व्यादिः समायातस्तद्गृह एव प्रथमं वसतिं याचते, तस्याश्च स्थानदातृत्वेन प्रसिद्धत्वात्पूर्व्वशय्यातरीति भगवतीसूत्रवृत्त्यनुसारेण पूर्व्वशय्यातरीशब्दार्थो ज्ञेय इति ॥ १२६ ॥

तथा—श्रीजिनानामवधिज्ञानं सदृशं किंवा विशेष इति प्रश्नोऽत्रोत्तरं—यो जिनो यतः समेति तस्य तत्स्थानसम्बन्धि प्रवर्धमानं वाऽवधिज्ञानं भवतीति न सर्व्वेषां जिनानामवधिज्ञानसादृश्यमिति ॥ १२७ ॥

तथा—चतुर्मासकपारणके मासद्वयान्तस्साधूनां वस्त्रग्रहणं कल्पते नवेति प्रश्नोऽत्रोत्तरं—वर्षाकाले यत्र क्षेत्रे चतुर्मासकं स्थितं तत्पूर्त्तावपि तत्रान्यत्रापि च संविग्नक्षेत्रे सक्रोशयोजनप्रमाणे कारणं विना मासद्वयान्तर्वस्त्रादिग्रहणं साधूनां न कल्पते, एतदक्षराणि विस्तरतो निशीथदशमोद्देशकचूर्णौ सन्तीति ॥ १२८ ॥

तथा—जातिस्मरणं सङ्ख्यातभवनिर्णायकमसङ्ख्यातभवनिर्णायकं वेति **प्रश्नोऽत्रोत्तरं**—जातिस्मरणमपि समतिक्रान्तसङ्ख्यातभवावगमस्वरूपं मतिज्ञानभेद एवेति **कर्म्मग्रन्थवृत्त्याचाराङ्गवृत्त्यनुसारेण** सङ्ख्यातभवनिर्णायकं जातिस्मरणं ज्ञायत इति ॥ १२९ ॥

तथा—कृतचतुर्विधाऽऽहारोपवासप्रत्याख्यानस्य सन्ध्यायां षडावश्यकवेलाया तत्प्रत्याख्यानं गुरोः समक्षं करणीयं ? किंवा मनसा ? किं वा न ? तथैव कृतषष्ठस्य द्वितीयदिनेऽन्यथा वेति, **प्रश्नोऽत्रोत्तरं**—सन्ध्यायां कृतचतुर्विधाहारोपवासप्रत्याख्यानस्य मनसा स्मरणं न तु पुनः करणं, तथैव कृतषष्ठस्य द्वितीयदिनेऽपीति ॥ १३० ॥

तथा—दिगाचार्यशब्देन किमुच्यत इति **प्रश्नोऽत्रोत्तरं**—सचित्ताचित्तमिश्रवस्त्वनुज्ञायी दिगाचार्य इति **योगशास्त्रचतुर्थप्रकाशवृत्तौ** प्रायश्चित्तं वैयावृत्त्यमिति श्लोकव्याख्याने दिगाचार्यशब्दार्थो ज्ञेय इति ॥ १३१ ॥

तथा—कृमिहराह्वानोऽजमकः किं सचित्तोऽचित्तो वेति **प्रश्नोऽत्रोत्तरं**—कृमिहराह्वानोऽजमको वृद्धैरचित्ततया व्यवह्रियमाणोऽस्तीति ॥१३२॥

तथा—पञ्चम्यष्टम्योः श्रीनेमिः संसारदावेतिस्तुती कथनीये इति निश्चयोऽथवा श्रीनेमिनाथमहावीरयोरपरेपि स्तुती कथनीये इति **प्रश्नोऽत्रोत्तरं**— पञ्चम्यष्टम्योः श्रीनेमिः संसारदावेति स्तुतिभ्यामपरे श्रीनेमिनाथमहावीरयोः स्तुती नोच्येते इति नियमो ज्ञातो नास्ति, परं यद्यायातस्तदा प्रायेण ते उच्येते इति ॥ १३३ ॥

तथा—जिनवरस्य स्कन्धे संयमग्रहणावसरे सुरपतिर्यत्सुरदूष्यं मुञ्चति तस्यावस्थानस्य मानं प्रसाद्यमिति **प्रश्नोऽत्रोत्तरं**—दीक्षासमये देवेन्द्रमुक्तजिनवरस्कन्धस्थदेवदूष्यस्यावस्थाकालनियममाश्रित्य **सप्ततिशतस्थानकानुसारेण** श्रीवीरस्य साधिकं वर्षं यावच्छेषाणां च तीर्थकृतां यावज्जीवं देवदूष्यावस्थितिर्ज्ञाताऽस्ति, **श्रीजम्बूद्वीपप्रज्ञप्त्यनुसारेण** तु श्रीऋषभदेवस्य देवदूष्यावस्थानकालमानं श्रीवीरवदिति ज्ञेयमिति ॥ १३४ ॥

तथा—केचिद्रावणस्य सुतां शीता मूलनक्षत्रजातां वदन्ति तत्सत्यमितरथा वेति ? **प्रश्नोऽत्रोत्तरं–वसुदेवहिण्डौ** शीता रावणस्य सुता प्रोक्ताऽस्ति, सा मूलनक्षत्रजातेति व्यक्तिस्तु दृष्टा नास्तीति ॥ १३५ ॥

तथा—सांव्यवहारिकाः के प्रतिपाद्यन्ते ? किं निगोदावस्थात उद्वृत्ता उत सूक्ष्मनिगोदेभ्य उद्वृत्ता उत सूक्ष्ममात्रोद्वृत्ता इति ? **प्रश्नोऽत्रोत्तरं–प्रज्ञापनावृत्तौ** निगोदादुद्वृत्ता इति सामान्यं वचो, न सामान्यं विशेषबाधां कर्तुं समर्थं स्यात्, सूक्ष्ममात्राणां निगोद इति संज्ञा नास्ति, निगोद इति नाम वनस्पतौ प्रघोषे तथा सूत्रेऽपि तथैव दृश्यते, सूक्ष्मनिगोदेभ्य उद्वृत्तास्त एव सांव्यवहारिका इति श्रुतिः, परम्परयाऽपि बहुश्रुतानामयं प्रघोषो, यतः—"सर्वे जीवा व्यवहार्यव्यवहारितया द्विधा। सूक्ष्मा निगोदा एवान्त्यास्तेऽन्येऽपि व्यवहारिणः" ॥ १ ॥ इति योगशास्त्रवृत्तावपि ॥ १३६ ॥

**इति सकलसूरिपुरन्दरपरमगुरुगच्छाधिराजभट्टारकश्रीविजयसेनसूरिप्रसादीकृतप्रश्नोत्तरसङ्ग्रहे भट्टारकश्री ५ श्रीहीरविजयसूरिशिष्यपण्डित शुभविजयगणिविरचिते प्रथमोल्लासः सम्पूर्णः ॥ १ ॥**

---

# अथ द्वितीयोल्लासः ॥



श्रीनाभेयं जिनं नत्वा, सत्त्वाभीष्टार्थसाधकम् । विधीयते मयामोदादुल्लासः प्रथमेतरः ॥ १ ॥

## पण्डितआण(न)न्दविजयगणिकृतप्रश्नास्तदुत्तराणि च ।

यथा—जिनप्रतिमा एकाङ्गुलादारभ्य यावदेकादशाङ्गुलानि तावत्प्रमाणा गृहे पूजयितुं कल्पत इत्यक्षराणि मत्पार्श्वे सन्ति, यानि चैताद्विचारमाश्रित्य विशेषाक्षराणि भवन्ति तानि प्रसाद्यानि, यतोऽत्र नवीनप्रतिमामाश्रित्य श्रद्धालवः पृच्छन्ति–कत्यङ्गुला प्रतिमा पूजयितुं शुद्धचति, कत्यङ्गुला च नेति ? **प्रश्नोऽत्रोत्तरम्**–एकाङ्गुलप्रतिमाया आरभ्यैकादशाङ्गुला प्रतिमा पूजयितुं कल्पते, उपरितनी तु जिनगृहे, अत्रायं विशेषो–गृहे जिनगृहे च विषमाङ्गुलप्रमाणैव प्रतिमा पूजयितुं कल्पते, न समाङ्गुलप्रमाणा, ठक्कुरफेरकृतवास्तुसारादौ तथैव प्रतिपादनादिति ॥ १ ॥

तथा—पूगीफलानां खण्डानि चूर्णानि वा यतीनां कसेल्लकादिवाद्विहर्त्तुं कल्पन्ते नवा इति ? **प्रश्नोऽत्रोत्तरम्**–पूगीफलखण्डानि चूर्णानि केवलानि विहर्त्तुं न कल्पन्त इति गच्छप्रवृत्तिः ॥ २ ॥

तथा—आगम १ श्रुता २ ऽऽज्ञा ३ धारणा ४ जीत ५ व्यवहारेष्वधुना कियन्तो व्यवहारा वर्त्तन्त इति ? **प्रश्नोऽत्रोत्तरम्**:—आगमव्यवहारः साम्प्रतं नास्त्येव, श्रुतव्यवहारस्तु सम्पूर्णो नास्ति, कियान् वर्त्तत इति, श्रुतादीनां चतुर्णां व्यवहाराणा साम्प्रतं विद्यमानत्वमवसीयते, तत्रापि प्रायश्चित्तप्रदानं प्रायो जीतव्यवहारानुसारेण प्रवर्त्तत इति ॥ ३ ॥

तथा—सामायिकाऽधिकारे पूर्व्वमीर्यापथिकाप्रतिक्रमणं शास्त्रानुसायुत पश्चादिति प्रश्नोऽत्रोत्तरं—सामायिकाधिकारे महानिशीथहारिभद्रीयदशवैकालिकबृहद्वृत्त्याद्यनुसारेण युक्त्यनुसारेण सुविहितपरम्परानुसारेण च पूर्व्वमीर्यापथिकीप्रतिक्रमणं युक्तिमत्प्रतिभाति, यद्यप्यावश्यकचूर्णौ 'पच्छा इरिआवहिआए पडिक्कमइ' इत्युक्तमस्ति, पर तत्र साधुसमीपे सामायिककरणानन्तरं चैत्यवन्दनमपि प्रोक्तमस्ति, तत ईर्यापथिकीप्रतिक्रमणं सामायिकसम्बद्धमेवेति कथं निश्चीयते ? तेन चूर्णिगतसामायिककरणसामाचारी सम्यक्तया नावगम्यते, यद्यपि योगशास्त्रवृत्तिदिनकृत्यवृत्त्यादौ पश्चादीर्यापथिकाप्रतिक्रमणं दृश्यते तत्तु चूर्णिमूलकमेवेति तदुपर्यपि पश्चादीर्यापथिकाप्रतिक्रमणानिर्णीतिः कथं भवतीति ॥ ४ ॥

तथा—गर्जितशब्दो जलसमुत्थो वायुसमुत्थो वाऽन्यद्वा किमपीति ? प्रश्नोऽत्रोत्तरं—स्थानाङ्गवृत्तौ स्थाने स्थाने स्तनितादिशब्दानां व्याख्याने मेघगर्जितमित्यर्थकरणान्मेघस्य च जलमयत्वाद्गर्जितशब्दो जलसमुद्भवस्सम्भाव्यते, वायुसमुत्थः शब्दो गर्जितमित्यक्षराणि तु शास्त्रे नोपलभ्यन्त इति ॥ ५ ॥

तथा—"संखाईए उ भवे, साहइ जं वा परो उ पुच्छिज्जा । न य णं अणाइसेसी, वियाणई एस छउमत्थो" ॥ १ ॥ इयं गाथा गणधरानाश्रित्योक्ता सामान्यतश्चतुर्द्दशपूर्व्विणो वेति, तथा तत्रावधिज्ञानी सङ्ख्येयानसङ्ख्येयांश्च भवान् पश्यति १ एवं मनःपर्यायज्ञान्यपि २ केवलज्ञानी तु नियमतोऽनन्तान् ३ जातिस्मरणस्तु नियमतस्सङ्ख्येयानित्याचाराङ्गवृत्तौ द्वादशपत्रे प्रोक्तमस्ति, अथ चतुर्द्दशपूर्व्वी कति भवान् जानातीति, तथा चतुर्द्दशपूर्व्वविदोऽसङ्ख्यान् भवान् जानन्तीति प्रघोषस्सत्योऽसत्यो वेति ? प्रश्नोऽत्रोत्तरं—'सङ्खाईए उ भवे' इयं गाथा गणधरानाश्रित्यैवावश्यके प्रोक्ताऽस्तीति, तथैतदनुसारेणान्येऽपि सम्पूर्णचतुर्द्दशपूर्व्वविदोऽसङ्ख्येयान् भवान् जानन्तीत्यवसीयते, उभयेषामपि श्रुतस्य तुल्यत्वादिति, तथोक्तयुक्त्या चतुर्द्दशपूर्व्वविदः सङ्ख्यातीतान् जानन्तीति प्रघोषोऽपि सत्यस्सम्भाव्यत इति ॥ ६ ॥

तथा—अऽष्टादशसु भावदिक्षु बीजरुहसम्मूर्च्छेजवनस्पतिभेदौ कुत्र वनस्पतिभेदेऽन्तर्भवत इति प्रश्नोऽत्रोत्तरं—आचाराङ्गनिर्युक्त्या-
दावष्टादशसु भावदिक्ष्वग्रबीजाना चतुर्णां वनस्पतिभेदानां मुख्यतयाऽभिधानेनोपलक्षणाद्बीजरुहसम्मूर्च्छेजवनस्पतिभेदावपि दशवैकालिकाद्युक्तौ
सङ्गृहीतौ वेदितव्यौ, अनयोर्मध्येऽग्रबीजादिष्वमुकस्मिन्नयमन्तर्भवतीति व्यक्तिस्तु शास्त्रे कृता न दृश्यत इति ॥ ७ ॥

तथा—सौधर्मेशानदेवी अष्टमदेवलोके गता प्रथमदेवलोकदेवो वाऽच्युते गतो भवनपतिदेवो वा सौधर्मे गतः प्रथमकल्पदेवो वा तृतीय-
पृथिव्यां गतोऽवधिना कियत्क्षेत्रं परितः पश्यतीति, प्रश्नोऽत्रोत्तरं—देवादीनामवधेरनुगामुकत्वाद्यो यत्रोत्पन्नो देवादिरवधिना यावत्क्षेत्रं पश्यति स
तावदेवान्यत्र गतोऽपि पश्यतीति ज्ञायत इति ॥ ८ ॥

तथा—महत्त्वं मेरोरपि महत्तरशरीरकरणसामर्थ्यं, तथा प्राप्तिर्भूमिस्थस्याङ्गुल्यग्रेण मेरुपर्व्वताग्रप्रभाकरादिस्पर्शनसामर्थ्यमिति योगशास्त्र-
वृत्तौ " कफविप्रुणमलामर्श सर्व्वौषधिमहर्धयः " इत्यस्य व्याख्याने प्रोक्तमस्ति, परमत्रोत्कर्षतोऽप्युत्सेधाङ्गुलमानेन लक्षयोजनप्रमाणस्य वैक्रिय-
शरीरस्य सम्भवान्मेरोरपि महत्तरशरीरकरणं भूमिस्थस्याङ्गुल्यग्रेण मेर्व्वग्रादिस्पर्शनं कथं घटत इति प्रश्नोऽत्रोत्तरं—यद्यपि 'सरीरमुस्सेह अंगु-
लेणं तहेत्ति उत्सेधाङ्गुलेन शरीरमानमुक्तमस्ति, तथापि तत्प्रायिकं सम्भाव्यते, तेन न काप्यनुपपत्तिः, अन्यथा भूमिस्थस्याङ्गुल्यग्रेण मेरुपर्व्वताग्रादि-
स्पर्शासम्भवात्, किञ्च यद्येकान्ततः शरीरमुत्सेधाङ्गुलेनैव स्यात्, तदा प्रज्ञापनोपाङ्गादावुक्तो द्वादशयोजनप्रमाणशरीरोऽसालिकाजीवो महाविदेहा-
दिचक्रिणां प्रमाणाङ्गुलेन द्वादशयोजनप्रमाणस्य स्कन्धावारस्य विनाशहेतुः कथं सम्भवति,' कथं वा कृतलक्षयोजनवैक्रियरूपेण सौधर्मदेवलोकं गतेन
चमरेन्द्रेण एकः पादः पद्मवरवेदिकायां मुक्तोऽपरश्च सुधर्म्मासभायामित्यादिकं भगवत्याद्युक्तं सम्भवतीति ॥ ९ ॥

तथा—वलोणाघोलो वस्त्रागालितो विकृतिर्निर्विकृतिर्वेति, प्रश्नोऽत्रोत्तरं—वलोणाघोलो वस्त्रगालितो लवणसहितो वा निर्विकृतिः, अन्यथा तु विकृतिरिति ॥ १० ॥

तथा—चाक्रिणः चन्दनपेषिका दासी वा स्त्री तथा भगवत्यामेकोनविंशशतकतृतीयोद्देशके 'जउगोलासमाणपुढविकायं' इत्यस्ति, आचाराङ्गवृत्तौ तु प्रथमाध्ययनस्य द्वितीयोद्देशके वेदनाद्वारे 'आर्द्रामलकप्रमाणं सचित्तपृथवीगोलकमेकविंशतिर्वारान् पिंष्यादि'त्यस्ति कोऽयं भेद इति ? प्रश्नोऽत्रोत्तरं—पञ्चमाङ्गे महाबलाधिकारे 'अट्ठ वण्णगपेसीओ' इत्याद्युक्तमस्ति, तदनुसारेण दास्यवसेयेति, तथाऽऽर्द्रामलकजतुगोलकयोरेक एवार्थस्सम्भाव्यत इति ॥ ११ ॥

तथा—'केवली णं भंते! अस्सिं समयंसि जेसु आगासपदेसेसु हत्थं वा पायं वा ओगाहित्ता णं चिट्ठती' त्यालापकेऽपि भगवतीत आचाराङ्गवृत्तौ द्वितीयाध्ययनप्रथमोद्देशके पाठभेदोऽस्ति, सोऽपि कथं घटत इति प्रश्नोऽत्रोत्तरं—आचाराङ्गवृत्तावुक्तं चेत्युक्तमस्ति, न तूक्तं भगवत्यामिति, तेनायं पाठो ग्रन्थान्तरगतस्सम्भाव्यते, अथवाऽऽचाराङ्गवृत्तिकारकालवर्ति भगवत्यादर्शेष्वयं पाठो दृष्टस्सम्भाव्यत इति ॥ १२ ॥

तथा—आवश्यकान्तर्भूतश्चतुर्विंशतिस्तवस्त्वारातीयकालभाविना श्रीभद्रबाहुस्वामिनाऽकारीत्याचाराङ्गवृत्तौ द्वितीयाध्ययनस्यादौ तदत्र किमिदमेव सूत्रं भद्रबाहुनाऽकारि सर्वाणि वा आवश्यकसूत्राणि कृतान्युत पूर्वं गणधरैः कृतानीति किं तत्त्वमिति ? प्रश्नोऽत्रोत्तरं—आचाराङ्गादिकमङ्गप्रविष्टं गणभृद्भिः कृतम्, आवश्यकादिकमनङ्गप्रविष्टमङ्गैकदेशोपजीवनेन श्रुतस्थविरैः कृतमिति विचारामृतसङ्ग्रहाऽऽवश्यकवृत्त्याद्यनुसारेण ज्ञायते, तेन भद्रबाहुस्वामिनाऽऽवश्यकान्तर्भूतचतुर्विंशतिस्तवरचनमपराऽऽवश्यकरचनं च निर्युक्तिरूपतया कृतमिति भावार्थः श्रीआचाराङ्गवृत्तौ तत्रैवाधिकारेऽस्तीति बोध्यमिति ॥ १३ ॥

तथा—जिनप्रतिमाना यथा भ्रूस्थाने कृष्णता क्रियते तथैवौष्ठयो रक्तता क्रियते नवेति ? प्रश्नोऽत्रोत्तरं—शाश्वतप्रतिमानुसारेण भ्रूस्थाने कृष्णताकरणवदोष्ठयो रक्तताकरणमविरुद्धमिति ॥ १४ ॥

तथा—जिनप्रतिमाना लाहिसत्काङ्गीरचना क्रियमाणा दृश्यते, सा युक्तिमती नवेति । प्रश्नोऽत्रोत्तरं—यद्यपि लाहिसंस्कारे किञ्चिदपावित्र्यं श्रूयते तथापि नामग्राह निषेधाक्षरानुपलम्भादिदानींतनकाले स्थाने स्थाने तथाप्रवृत्तिदर्शनाद्बहूनां पूजाकरणान्तरायप्रसङ्गाच्च सर्वथा निषेधः कर्त्तुं न शक्यत इति ॥ १५ ॥

तथा—आचाराङ्गप्रथमाध्ययनषष्ठोद्देशकवृत्तौ “ कुलकोडिसयसहस्सा, बत्तीस सग अट्ठ नव य पणवीसा, एगिंदिबितेइंदियचउरिंदिअ-हरिअकायाण ” ॥ १ ॥ अत्र गाथायां पृथिव्यादिचतुर्णां कुलकोटिलक्षा द्वात्रिंशद्वनस्पतिकायानां पञ्चविंशतिः कुलकोटिलक्षाः, सङ्ग्रहण्यां तु ‘ एगिंदिएसु पंचसु, बार सग ति सत्त अट्ठवीसा येति ’ अत्र चतुर्णां पृथिव्यादीनां द्वादशसप्तत्रिसप्तमीलने एकोनत्रिंशत्कुलकोटिलक्षा भवन्ति, आचाराङ्गवृत्तौ तु पृथिव्यादीनां पृथक् पृथक् कतिकुलकोटिलक्षा इति सम्यक् प्रसाद्यमिति, प्रश्नोऽत्रोत्तरं—आचाराङ्गोक्तगाथायां पृथिव्यादीनां चतुर्णां द्वात्रिंशत्कुलकोटिलक्षेषु प्रत्येकं व्यक्तिर्नोपलभ्यत इति ॥ १६ ॥

तथा—‘ अस्संखपयरतुल्ला, बायरपज्जत्त वायुकायेति, भीमे भवंमि भमिउत्ति, महादण्डकस्तवे आचाराङ्गनिर्युक्तौ तु “ जे बायरपज्जत्ता, पयरस्स असंखभागमेत्ता उ । सेसा तिन्निवि रासी, वीसुं लोगा असंखेज्जा ” ॥ १ ॥ पूर्वत्रासङ्ख्येयाः प्रतरा उत्तरत्र प्रतरस्यासङ्ख्येयभागस्तेनात्र किं तत्त्वमिति प्रश्नोऽत्रोत्तरं—अत्र ‘भीमे भवंमि भमिओ’ इति स्तोत्रोक्तानुसारी पाठः प्रज्ञापनादावस्ति, तेनाऽऽचाराङ्गनिर्युक्तौ मतभेदस्सम्भाव्यत इति ॥ १७ ॥

तथा—नरकपृथिवीषु देवलोकेषु वाऽष्टासु दिक्षु चतसृषु वा दिक्षु पङ्क्तिगतनरकावासविमानविचारः प्रवर्त्तते, तत्र नाम १ स्थापना २ द्रव्य ३ क्षेत्र ४ ताप ५ प्रज्ञापक ६ भावदिशां आवश्यकाद्युक्तानां सप्तानां मध्ये का दिग् वर्त्तते ? एतासां दिशां मध्यवर्त्तिनी काचिद्दिगन्या वा देवलोकादिषु दिक् प्रवर्त्तते ? तत्सहेतुकं प्रसाद्यमिति ? **प्रश्नोऽत्रोत्तरं**—पङ्क्तिगतनरकावासविमानविचाराधिकारे नामादीनां सप्तानां दिशां मध्ये क्षेत्रदिग् ज्ञायत इति ॥ १८ ॥

तथा—दीपालिकाकल्पे दुष्षमाकालसङ्घस्तोत्रे च श्रावकसङ्ख्यातो यतिसङ्ख्याऽतिबह्वी दृश्यते तत्र किं तात्पर्यमिति ? **प्रश्नोऽत्रोत्तरं**—दीपालिकाकल्पदुष्षमाकालसङ्घस्तोत्रकुलकादावुत्कृष्टभङ्गस्थानां श्राद्धादीनां सङ्ख्या कथिताऽस्तीति सम्भाव्यते, आचार्यादीनां तु जघन्यादिभेदत्रितयस्थानामपीति न काप्यघटमानताऽऽशङ्का, तथाऽऽचार्यसङ्ख्याविषये **महानिशीथप्रवचनसारोद्धारवृत्ती** अपि संवादिके एवेति बोध्यम् ॥ १९ ॥

तथा—" पणवीसजोअणतुंगो, बारस य जोअणाइं विच्छिन्नो । जो अणमेगं नालुअ, इग कोडी सट्ठिलक्खाइं " ॥ १ ॥ कलशानामियं सङ्ख्या कथं मिलति ? तद्व्यक्त्या प्रसाद्यमिति **प्रश्नोऽत्रोत्तरं**—अच्युताधिपत्यादीनां द्विषष्टीन्द्राणा द्विषष्टिस्तथा द्वात्रिंशदधिकशतनरलोकस्थसूर्यचन्द्राणां द्वात्रिंशदधिकं शतमेवं चतुर्नवत्यधिकशतेन्द्राणां चतुर्नवत्यधिकशतमभिषेकाः तथा दक्षिणोत्तरदिग्भेदेनासुराधिपत्योर्दशेन्द्राणीना दश तथा नागादीनां नवानामपि स्थाने स्थाने एकालापकेन स्वरूपाभिधानाद्दक्षिणोत्तरदिग्भेदेन तदधिपतीनां जात्यपेक्षया द्वादशाग्रमहिषिणा द्वादश, एवं व्यन्तराधिपतीनां चतुरग्रमहिषीणां चत्वारः, एवं ज्योतिष्काधिपतीनां चतुरिन्द्राणीना चत्वारः, आद्यदेवलोकद्वयाधिपत्योः षोडशेन्द्राणीनां षोडश, एवं षट्चत्वारिंशदिन्द्राणीनां षट्चत्वारिंशदपिभेकाः, तथा सामानिकानामेकस्त्रायस्त्रिंशानामेको लोकपालानां चत्वार अङ्गरक्षकानामेकः पार्ष-

ध्यानामेकोऽनीकाधिपतीनामेकः प्रकीर्णकसुराणामेक एवं दश, सर्व्वमिलने सार्द्धद्विशता २५० भिषेकास्तथा ( अभिषेकाणा तथा:) कनकमयादीनमष्टप्रकाराणा कलशानां प्रत्येकमष्टाष्टौ सहस्रा इति चतुष्षष्टिसहस्रकलशाः, तदङ्कस्याभिषेकाङ्केन गुणने गाथोक्ता कलशानां सङ्ख्या भवतीति सम्भावना छूटकपत्रे दृश्यत इति ॥ २० ॥

तथा—राजप्रश्नीयोपाङ्गे ' तस्स ण पएसिस्स रण्णो जेट्ठे भाउअवयंसए चित्ते नामं सारही होत्था ' इत्यत्र ' जेट्ठे भाउअवयंसए ' इत्यस्य कोऽर्थ इति ? प्रश्नोऽत्रोत्तरं—अनेकप्रकारेणापि भ्राता सम्भवति, स च वयस्योऽपि भवति, वयसा च वृद्ध इति चित्रसारथिः प्रदेशिराजस्य जेष्ठो भ्रातृवयस्य उच्यत इति ॥ २१ ॥

तथा—कल्पसूत्रे सामाचार्यामेकपञ्चाशत्तमसूत्रे ' निक्खमित्तए वा पविसित्तए वा ' इति पदद्वयमधिकमिव दृश्यत इति प्रश्नोऽत्रोत्तरं—' भत्तपाणपडिआइक्खित्तए ' त्ति वचनात् कश्चित्सामान्यतो विहितानशनः कश्चिच्च कृतपादपोपगमनो भिक्षुर्विहर्त्तुं प्रवर्त्तितुमिच्छेदित्यर्थः सङ्गच्छते तदनुसारेण सामान्येन कृतानशनस्य ' निक्खमित्तए वे ' त्यादि विशेषणानि यथासम्भवं सङ्गच्छन्त एव, नतु कृतपादपोपगमनस्येति न काप्यधिकतेति ॥ २२ ॥

तथा—व्यवहारषष्ठोद्देशके ग्रामनगरादिषु वर्षाकाले ऋतुबद्धकाले वाऽगीतार्थानां बहूनामपि प्रकल्पधरगीतार्थमेकं विनाऽवस्थाननिषेधोऽवस्थाने च प्रायश्चित्तमाज्ञाभङ्गादयो दोषाश्चेत्युक्तमास्ति, अयं विधिरधुनातनः पुरातनो वेति प्रश्नोऽत्रोत्तरं—सार्वत्रिकोऽयं विधिरित्यवसीयते, अधुना तु प्रकल्पधरगीतार्थं विनापि विहारकरणं तद्द्रव्यक्षेत्राद्यनुभावत इति ॥ २३ ॥

यथा—जिनबिम्बानां वस्त्रपरिधापनं शास्त्रेषु दृश्यते, आत्मनां गच्छे कथं न क्रियते ?, कैश्चित्तु क्रियते तदात्मभिः किं निषिध्यते मन्यते

वेति **प्रश्नोऽत्रोत्तरं**—जिनबिम्बानां वस्त्रपरिधापनिका शास्त्रेषु दृश्यते, परं प्रधानवस्त्राङ्गिकादिभिराभरणैरिव यथौचित्येनैव क्रियमाणा युक्तिमती, न तु मस्तकस्योपरि वस्त्रस्य मोचनादिनेति ॥ २४ ॥

**तथा**—साधुभिः पौषधिकश्राद्धैश्च मात्रकाणि पात्रकाणीव द्विः प्रतिलेख्यान्युत व्यापारणावसरे एव प्रमृज्य व्यापारणीयानीति ? **प्रश्नोऽत्रोत्तरं**—साधुभिः पौषधिकश्राद्धैश्च मुख्यतो मात्रकाण्यपि पात्राणीव द्विः प्रतिलेख्यानि, व्यापारणावसरे च प्रमृज्य व्यापारणीयानीति ॥ २५ ॥

**तथा**—कालवेलायां प्रकरणानि निर्युक्तयो वा साधुभिर्गण्यन्ते नवा ? तथा कालवेलायां श्राद्धैरपि सङ्ग्रहणीप्रमुखं गण्यते नवेति ? **प्रश्नोऽत्रोत्तरं**—कालवेलायां सर्वेषामप्याचारप्रदीपादौ निर्युक्तिभाष्यादिप्रभृतिसर्वपठनपाठनादि प्रतिषिद्धमस्ति ॥ २६ ॥

**तथा**—योगविधौ ये महानिशीथेऽष्टस्वध्ययनेषूद्देशका उक्तास्सन्ति, तेष्वधुना कोऽप्यस्ति नवा इति ? **प्रश्नोऽत्रोत्तरं**--योगविधानोक्त-महानिशीथोद्देशकास्तु तत्रादर्शानां वैगुण्याद्व्याख्यानाभावाच्च व्यक्तया नोपलभ्यन्त इति ॥ २७ ॥

**तथा**—पौषधकरणात् पूर्वं स्वाध्यायः कृतो देवाश्च वन्दितास्तदा पश्चात्पौषधकरणे उपधानप्रवेशे वा पुनरपि स्वाध्यायदेववन्दनादि करणीयं नवेति, **प्रश्नोऽत्रोत्तरं**--पौषधकरणात्पूर्वं स्वाध्यायदेववन्दनादि कृतं स्यात्तदा पश्चादपि तेनैव सरतीति वृद्धोक्तिरिति ॥ २८ ॥

**तथा**—पौषधिकैस्त्रिसन्ध्यं विस्तरेण देवा वन्द्यन्ते, तदक्षराणि क्व सन्ति ?, मध्याह्ने देववन्दना तु **सामाचारी पौषधविधिप्रकरणादिषु** दृश्यते इति ? **प्रश्नोऽत्रोत्तरं**--यद्यपि पौषधिकश्राद्धानां सामाचार्यादिषु मध्याह्न एव देववन्दनं दृश्यते, तथापि " पडिक्कमओ गिहिणोऽवि हु, सगवेला पंचवेल इअरस्स । पूआसु तिसं,झासु अ, होइ तिवेला जहन्नेणं " ॥ १ ॥ इत्याद्यक्षरवशात् त्रिकालपूजास्थानीयत्वेन परम्परागतत्वेन च त्रिकालं देववन्दनं युक्तिमदेवेति ॥ २९ ॥

तथा—दिनचर्यादिषु 'अङ्गपडिलेहयं संदिसावेमीत्यादेशमार्गणं प्रतिलेखनाया प्रातस्सायं च दृश्यते, आत्मनां तु न, तत्र किं निदानमिति ? प्रश्नोऽत्रोत्तरं–दिनचर्यादिषु अङ्गपडिलेहणं सन्दिसावेमीत्याद्यादेशमार्गणं तु श्रीदेवसूरिकृतायां दिनचर्याया नास्ति, गच्छान्तरीयदिनचर्यागतं सम्भाव्यत इति ॥ ३० ॥

तथा—पण्मासोपरिवर्तिस्तन्यपायि लघुबालकमाता तत्सङ्घट्टे जायमाने सामायिकं प्रतिक्रमणं पौषधं वा करोति नवेति ? प्रश्नोऽत्रोत्तरं—पण्मासोपरिवर्तिस्तन्यपायिबालकसङ्घट्टे जायमाने तन्मातुः सामायिकप्रतिक्रमणादिविधानं मुख्यवृत्त्या युक्तिमत्तया न प्रतिभासत इति ॥ ३१ ॥

तथा—मालासम्बन्धि स्वर्ण्णरजतसूत्रादि सर्व्वं देवद्रव्यं वा ज्ञानद्रव्यं वा साधारणद्रव्यं वेति ? प्रश्नोऽत्रोत्तरं–तत् सर्व्वं देवद्रव्यमिति सम्प्रदायः ॥ ३२ ॥

तथा—क्वापि ग्रामादिषु श्राद्धगृहसङ्कीर्ण्णताया श्राद्धकुटीरादाववस्थानेऽपि ग्रामाधिपतेर्वा देशाधिपतेर्वा शय्यातरगृहमुक्तं शुद्धयति नवा ? इति प्रश्नोऽत्रोत्तरं–यन्निश्रितं गृहावस्थानं स एव शय्यातरो भवतीति बृहत्कल्पादावुक्तमस्ति, महति कारणे तु तद्ग्रहणमप्यनुज्ञातमस्तीति ॥ ३३ ॥

तथा—सङ्खड्या साधवो विहरणार्थं न गच्छन्ति, सा च सङ्खडी विवाहादिप्रकरणरूपा साधर्म्मिकवात्सल्यरूपा वा ?, तथा कियद्भिर्जनैः सा भवतीति प्रश्नोऽत्रोत्तरं–सङ्खडीशब्देनौदनपाको जनसङ्कुलजेमनवारा च कल्पवृत्त्यादौ व्याख्यातमस्ति, ततो विवाहादिप्रकरणमेव सङ्खडिर्नतु साधर्म्मिकवात्सल्यमिति वक्तुं शक्यते, तेनोभयत्रापि जनसङ्कुलत्वात् कारणं विना साधुभिर्विहृत्यर्थं न गम्यते, तथा त्रिंशता चत्वारिंशता वा जनैः सङ्खडी भवतीति सम्भाव्यते ॥ ३४ ॥

तथा—प्रतिक्रमणसूत्रमध्ये श्राविकाः 'निच्चं परदारगमणविरइओ' इति पाठं कथयन्त्युत 'निच्चं परपुरिसगमणविरइओ' इति वेति प्रश्नोऽत्रोत्तरं-प्रतिक्रमणसूत्रपाठस्तु श्राद्धश्राविकाणां सदृश एव ज्ञायते, येनैतद्वृत्तौ स्त्रियं प्रति परपुरुषवर्ज्जनमुपलक्षणात् द्रष्टव्यमिति व्याख्यातमस्तीति ॥ ३५ ॥

तथा—कालग्रहणादिपूर्व्वकमुत्तराध्ययनादि गणनीयमित्यादि सामाचारीहीनत्वेन: यतीनामवसन्नत्वमिति केचन पृच्छन्ति तत्र किमुत्तरमिति प्रश्नोऽत्रोत्तरं-कालग्रहणादिपूर्व्वकमुत्तराध्ययनादि गणनीयमित्यादिसामाचारीहीनत्वेऽपि वसतिशोधनादिपुरस्सरं सुविहिताचरितं गणनमपि सामाचारीष्वेवेति कथं तेषामवसन्नत्वमिति ॥ ३६ ॥

तथा—एकादशप्रतिमाया श्राद्धः सामायिके 'जाव नियमं वा' 'जाव पडिमं वा' कथमुच्चरते ?, तथा पञ्चम्यादिप्रतिमासु अष्टम्यादितिथिषु रात्रौ कायोत्सर्गकरणवदेकादश्यां प्रतिमायां कायोत्सर्गं करोति नवा ? इति प्रश्नोऽत्रोत्तरं-एकादशप्रतिमायां श्रावकेण सामायिके 'जाव पडिम पज्जुवासामी'ति पाठो भणनीयः, तथा कायोत्सर्गोऽपि करणीयः ॥ ३७ ॥

तथा—आचार्याणामुपाध्यायानामधमाचार्याणां साधुसाध्वीश्रावकश्राविकाणां वा दुष्प्रसहं यावद्दुष्षमाया या सङ्ख्या दीपालिकाकल्पादिषूक्ताऽस्ति सा कया विवक्षया ?, पञ्चमारके दिनानि स्तोकानि जायन्ते सङ्ख्या च बह्वीति लोकाः पृच्छन्ति, अत्र किमुत्तरं दीयत इति ? प्रश्नोऽत्रोत्तरं-अत्र भरतक्षेत्रे दुष्षमाया अल्पकालत्वेऽपि भूमेः प्राचुर्याद्बहुषु साध्वादिसम्भवेन दीपालिकाकल्पाद्युक्तयुगप्रधानादिसङ्ख्यापूर्त्तिः सङ्गच्छते, न त्वात्मज्ञातसाध्वादिनेति बोध्यम् ॥ ३८ ॥

तथा—केवलिनः पट्टधरा भवन्ति नवा ? इति प्रश्नोऽत्रोत्तरं—' प्राप्ते निर्वाणसमये, पूर्णवर्षशतायुषा । सुधर्म्मस्वामिनाऽस्थापि, जम्बूस्वामी गणाधिपः ॥ १ ॥ तप्यमानस्तपस्तीव्रं, जम्बूस्वाम्यपि केवलम् । आसाद्य सदयो भव्यभविकान् प्रत्यबूबुधत् ॥ ६० ॥ श्रीवीरमोक्षदिवसादपि हायनानि, चत्वारि षष्टिमपि च व्यतिगम्य जम्बूः कात्यायन प्रभवमात्मपदे निवेश्य, कर्म्मक्षयेण पदमव्ययमाससाद ॥ ६१ ॥ इति परिशिष्टपर्वणि चतुर्थसर्गप्रान्तवचनानुसारेण केवलिनः पट्टधरा भवन्तीति प्रकटमेवावसीयत इति ॥ ३९ ॥

तथा—' एगजीवस्स णं भंते! एगभवग्गहणेणं केवइआ जीवा पुत्तत्ताए हव्व मागच्छंति ? गोअमा, जहन्नेणं एगो वा दो वा तिण्णि वा, उक्कोसेणं सयसहस्सपुहत्तं जीवा पुत्तत्ताए हव्वमागच्छन्तित्ति ' श्रीभगवतीसूत्रद्वितीयशतकपञ्चमोद्देशके, अत्र ' एगभवग्गहणेण ' मित्यस्य कोऽर्थः ? इति प्रश्नोऽत्रोत्तरं—एकस्मिन्समये ' सयसहस्सपुहुत्तं ' इत्यत्र पृथक्त्वशब्दो बहुत्ववाचको, नो चेदेतट्टीकायामेकसंगोगेऽपि शतसहस्रपृथक्त्वस्योत्पत्तिर्निष्पत्तिश्च मत्स्यादीना मनुष्याणामुत्पत्तिश्च प्रतिपादिताऽस्ति, तदा भवे का वार्त्ता ? तेन ' दिवसमुहुत्तपुहुत्ते ' त्यादिवज्जातिवाचकत्वादेकवचनान्ततति बोध्यमिति ॥ ४० ॥

तथा—आउलिसत्कदन्तकाष्ठे केचिद्बहुदोषं वदन्ति, तत्सत्यमसत्यं वा ?, तथा बदरीबब्बूलदन्तकाष्ठेभ्य आउलिदन्तकाष्ठे जीवाः किं अल्पा बहवस्तुल्या वेति प्रश्नोऽत्रोत्तरं—प्रज्ञापनायां प्रथमपदे गुच्छाधिकारे आउलिसत्कमूलकन्दस्कन्धत्वक्शाखाप्रवालेषु प्रत्येकमसङ्ख्येयजीवात्मकता प्रोक्ताऽस्ति, तदनुसारेण बदरीबब्बूलयोरपि षट्स्वपि स्थानेष्वसङ्ख्याता जीवाः सम्भाव्यन्ते, न तु न्यूनाधिकजीवाः ॥ ४१ ॥

तथा—लन्दिकानां पञ्चको गणः, परं तेषां कल्पस्य कालमानं कियत् ?, परिहारविशुद्धिकानामिवाष्टादश मासाः कालमानं ऊनाधिकं वेति ?

प्रश्नोऽत्रोत्तरं—यथालन्दिकाना कालमानं तु परिहारविशुद्धिकसाध्वतिदेशवाक्यस्य पञ्चकल्पचूर्ण्यादावुपलभ्यमानत्वेनाष्टादश मासाः संभाव्यन्त इति ॥ ४२ ॥

## पण्डित रविसागरगणिकृतप्रश्नास्तदुत्तराणि च ।

यथा—गुरुसम्बन्धिस्तूपकारापणाक्षराणि कुत्र ग्रन्थे सन्तीति प्रश्नोऽत्रोत्तरं—स्तूपकारापणाक्षराणि बहुषु ग्रन्थेषु सन्ति, तथाहि—" निव्वाणं चिइगागिइ, जिणस्स इक्खाग सेसयाणं च । सकहा थूभ जिणहरे, जायग तेणाहि अग्गित्ति " ॥ ६६ ॥ " थूभ सयभाउआणं, चउवीसं चेव जिणहरे कासी । सव्वजिणाणं पडिमा, वण्णपमाणेहिं निअएहिं " ॥ ६७ ॥ इत्यावश्यकनिर्युक्तौ द्वितीयबरवरिकाप्रान्ते, तथा स्तूपा जिनगृहं चेति भरतो भगवन्तमुद्दिश्य वर्द्धकिरत्नेन योजनायामं त्रिगव्यूतोच्छ्रितं सिंहनिषद्यायतनं कारितवान्, निजप्रमाणयुक्ताश्चतुर्विंशति जीवाभिमोक्तपरिवारयुक्तास्तीर्थकरप्रतिमाः, तथा भ्रातृशतप्रतिमा आत्मप्रतिमां च स्तूपशतं च मा कश्चिदाक्रमणं करिष्यतीति [ तत्रैकं भगवतः शेषानेकोनशतस्य भ्रातॄणामिति तथा ] लोहमयान् यन्त्रपुरुषांस्तद्द्वारपालांश्चकोरत्यादि हारिभद्र्यामावश्यकवृत्तौ निव्वाणमिति गाथाव्याख्याने, तथा स्तूपशतं भ्रातॄणां भरतः कारितवान् इत्यादि, 'थूभसयभाउआण' मिति गाथाव्याख्याने तथा ' भाउअस्स य तत्थेव पडिमाओ कारवेति, अप्पणो अ पडिमं पज्जुवासंतिअं सयं च थूभगाणं एगं तित्थगरस्स अवसेसाणि एगूणगस्स भाउअसयस्स, मा तत्थ कोई अभिगमिस्सतितित्ति लोहमणुआ ठविआ जंताउत्ता, जेहिं तत्थ मणुआ अइगंतुं ण सक्केतीत्यादि पूर्वोक्तगाथा ( यामा ) वश्यकचूर्णौ । तथा—'तएणं से सक्के देविंदे देवराया ते बहवे भवणवइ जाव वेमाणिए देवे एवं वयासी-खिप्पामेव भो देवाणुप्पिआ ! सव्वरयणामए महतिमहालए तओ चेइअथूभे करेह, एगं भगवओ तित्थगरस्स

चितिगाए, एगं गणहराणं चितिगाए, एगं अवसेसाणं अणगाराण चितिगाए, तएणं ते बहवे जाव करितीत्यादि जम्बूद्वीपप्रज्ञप्तौ तथा—' चिता-
स्थानत्रये देवा, रत्नस्तूपत्रयं ततः । अष्टापदगिरेर्नव्यं, शृङ्गत्रयमिव व्यधुः ॥ ६४ ॥ तथा ' भरतस्तत्र च स्वामिसंस्कारासन्नभूतले । प्रासाद योज-
नायाम, त्रिगव्यूतमितोच्छ्रयम् ॥ ६५ ॥ नामतः सिंहनिषद्यां, पद्यां निर्व्वाणवेश्मनः । उच्चैर्वर्द्धकिरत्नेन, रत्नाश्मभिरकारयत् ॥ ६६ ॥
तथा—तत्रैव कारयामास, दिव्यरत्नशिलामयाः । भ्रातॄणा नवनवतेः, प्रतिमा भरतेश्वरः ॥ २६ ॥ शुश्रूषमाणां प्रतिमामात्मनोऽपि महीपतिः ।
कारयामास तत्रैव, स हि भक्तेरतृप्तिकः ॥ २७ ॥ चैत्याद्बहिर्भगवतः, स्तूपमेकमकारयत् । भ्रातॄणा शतसेकोनं, स्तूपांश्च भरतेश्वरः ॥ २८ ॥
अत्र माऽऽशातना कार्षुर्गमनागमनैर्नराः । इत्यकार्षीद्यन्त्रमयान्, लोहानारक्षकान्नृपः ॥ २९ ॥ आरक्षपुरुषैर्लोहैर्यन्त्रायुक्तैश्च तैरभूत् । नृणामगम्य-
स्थान तन्मर्त्याद्बहिरिव स्थितम् ॥ ३० ॥' इत्यादिश्रीहेमाचार्यकृतश्रीऋषभचरित्रप्रान्ते, तथा 'लौकिकलोकोत्तरदेवगतगुरुगतरूप-
चतुर्विधमिथ्यात्वाधिकारे लोकोत्तरदेवगत तु परतीर्थिकसङ्गृहीतजिनबिम्बार्चनादि सप्रत्ययश्रीशान्तिपार्श्वनाथादिप्रतिमानामिहलोकार्थं यात्रो-
पयाचितमाननादि च, लोकोत्तरगुरुगतं च लोकोत्तरलिङ्गेषु पार्श्वस्थादिषु गुरुत्वबुद्धया वन्दनादि गुरुस्तूपादावैहिकफलार्थे यात्रोपयाचितादि चेति
श्राद्धप्रतिक्रमणसूत्रवृत्तौ 'सका कख विगिंछे'ति गाथाव्याख्याने, एवमन्येष्वपि ग्रन्थेषु स्तूपकारापणाक्षराणि सन्ति । तथा—मथुरापुर्यां श्रीजम्बु-
प्रभवप्रभृतिसूरीणां सप्तविंशत्यधिकपञ्चशतीमितानि स्तूपानि, तथा श्रीसोमसुन्दरसूरि श्रीसुमतिसाधुसूरिप्रमुखाणामपि च स्तूपानि साम्प्रतीयबहु-
मुनिजनैर्दृष्टचराणि सन्तीति तेनैतद्विषये न काऽपि शङ्का विधेयेति ॥ ४३ ॥

तथा—गुरुपादुकाग्रे प्रतिक्रमणादिकं शुद्धयति नवेति ? प्रश्नोऽत्रोत्तरं—केवलं देववन्दनं विना सर्व्वं प्रतिक्रमणादिकं शुध्यतीति, न च पादुका
पुष्पादिभिरर्च्यत इति प्रतिक्रमणादि न शुध्यतीति वाच्यं, पुष्पाद्यर्चितजिनप्रतिमानामग्रेऽपि प्रतिक्रमणादि क्रियायाः शुद्धयमानत्वादिति ॥ ४४ ॥

तथा—शङ्खश्रावकगृहे पुष्कलीश्राद्धेन पौषधशालायां गत्वेर्यापथिकी प्रतिक्रान्ता सा किमर्थमिति ? प्रश्नोऽत्रोत्तरं—पुष्कलीश्राद्धस्येर्यापथिकीप्रतिक्रमणे भगवतीवृत्तौ हेतुरुद्भावितो नास्तीति कथं तद्विषयो निर्णयः कर्तुं शक्यते ?, किं च अयं चरितानुवादो न तु विधिवादः, तेन नायं विधिस्सर्व्वैरनुष्ठेय एवेति ॥ ४५ ॥

तथा—देवलोकादिहागच्छन्तः सुराः निर्याणमार्गेणैवागच्छन्त्यन्येन वेति प्रश्नोऽत्रोत्तरं—यद्यपि सुराणामचिन्त्यशक्त्या सर्व्वत्राप्यागमनशक्तिरस्ति तथाऽपि सिद्धान्ते सुराणामागमनं प्रायो निर्याणमार्गेणोक्तं दृश्यत इति ॥ ४६ ॥

## अथ वृद्धपण्डितकमलविजयगणिकृतप्रश्नस्तदुत्तरं च

यथा—नृक्षेत्रबहिर्वर्त्तिनः सिंहादयः श्वापदाः पलभोजिनो वा भोगभूमिजतिर्यञ्च इव पृथ्वीफलाद्याहारिणो वा भवन्तीति प्रश्नोऽत्रोत्तरं—मनुष्यक्षेत्राद्बहिर्वर्त्तिना व्याघ्रादिहिंसकजीवानां प्रायः पलभोजित्वं सम्भाव्यते, समुद्रादिमत्स्यानामिव, न तु भोगभूमिजव्याघ्रादीनामिव केवलपृथ्वी—वृक्षफलादिभोजित्वं । किं च—यथा भोगभूमिजव्याघ्रादीनामल्पकषायित्व भोगभूमिजपृथ्व्यादीनां च यथा विशिष्टरसपरिणामो न तथेतरेषामिति सम्भावनानिदानम्, एतद्विषये विशेषाक्षराणि न स्मरन्तीति ॥ ४७ ॥

## अथ वृद्धपण्डितकनकविजयगणिकृतप्रश्नास्तदुत्तराणि च।

तथा—अचित्ताशनादिचतुष्कमध्ये रात्रौ त्रसजीवानां स्थावरजीवानां चोत्पत्तिर्भवति न वा इति ? प्रश्नोऽत्रोत्तरं—रात्रावचित्ताशनादिचतुष्कमध्ये " तज्जोणिआण जीवाणं, तहा संपाइमाण य। निसिभत्ते वहो दिट्ठो, सव्वदंसीहिं सव्वहा ॥ १ ॥ " इति श्राद्धदिनकृत्यसूत्रवचनात्

तथा—" अन्नइ तिहुअणनाहो, दोसे ससत्ति होइ राईए। भत्ते तगंधरसा, रसेसु रसिआ जिआ हुंति " ॥ १ ॥ त्ति छूटकगाथानुसारेण च स्थावरजीवोत्पत्तिः सम्भाव्यते न त्रसजीवानां रात्रियोगादिति ॥ ४८ ॥

तथा—अलेपमध्ये ' मोअणाती रोटी खाखरा फलादिकं ' कल्पते न वा ? इति प्रश्नोऽत्रोत्तरं—बहुषु ग्रन्थेषु अलेपशब्देन वल्लचणकादिकं व्याख्यातमस्ति, बृहत्कल्पभाष्यवृत्तिमध्ये तु ' मोअणरहितरोटी पापरा साथुउं आटु ' इत्यादिकं अलेपमध्ये कल्पते इति व्याख्यातमस्ति ॥ ४८ ॥

तथा—श्रद्धालूना सिद्धान्तपठननिषेधः कुत्र कुत्रागमे प्रकरणादौ च प्रोक्तोऽस्तीति प्रश्नोऽत्रोत्तरं—समवायाङ्गादौ यतीनां सिद्धान्तपठनाधिकारोऽस्ति, यतस्तत्राचाराङ्गादीनामुद्देशनकालादयः प्रोक्तास्सन्ति, ते च यतीनामेव घटन्ते, तथा—तिवरिसपरिआयस्स उ, आयारपकप्पनाममज्झयणं। चउवरिसस्स य सम्म, सूअगड नाम अंगंति ॥ १ ॥ इत्यादि सप्त गाथाः पञ्चवस्तुके कथितास्सन्ति, अत्राप्याचाराङ्गाद्यध्ययनयोग्यतामाश्रित्य यतिसम्बन्धीन्येव दीक्षापर्यायवर्षाणि नैयत्येनोक्तानि सन्ति, अयमर्थो व्यवहारच्छेदग्रन्थेऽप्यस्ति, एवं " गेहे दीवमपासंता " इत्यक्षराणि सूत्रकृताङ्गेऽपि वर्त्तन्ते, इत्याद्यक्षरानुसारेण साधव एव तदध्ययनाधिकारिणो न तु श्राद्धा इति ॥ ५० ॥

तथा—त्रिविधाहारद्विविधाहारप्रत्याख्यानकरणे श्राद्धानां पानीयतुर्याहारौ किं भक्ष्यौ न वेति ? प्रश्नोऽत्रोत्तरं—श्राद्धानां त्रिविधाहारद्विविधाहारप्रत्याख्यानेऽपि पानीयतुर्याहारौ भक्ष्यौ ज्ञेयौ, परमयं विशेषो येन प्रातस्त्रिविधाहारप्रत्याख्यानं कृतं स्यात् तस्यैकाशनादिकरणसमये तुर्याहारः कल्पते न तूत्थानानन्तरमिति, पानीयं तूभयत्राप्यचित्तं कल्पते, द्विविधाहारप्रत्याख्याने तु द्वयोरपि भक्ष्यतया सम्भवोऽस्ति, सन्ध्यायां तु त्रिविधाहारप्रत्याख्याने पानकाकारानुच्चारणात् सचित्तमपि पानीयं कल्पते ॥ ५१ ॥

तथा—लोकान्तिकाः किमेकावतारिण उत नेति ? प्रश्नोऽत्रोत्तरं—लोकान्तिका देवा एकावतारिण एवेत्येकान्तो ज्ञातो नास्तीति ॥ ५२ ॥

तथा—चउसट्ठिकरि सहस्सेति गाथाया व्याख्यानं प्रसाद्यमिति, **प्रश्नोऽत्रोत्तरं**–चतुष्पष्टिहस्तिसहस्राः, किंलक्षणाः ? सहाष्टदन्तैर्वर्त्तन्ते यानि तानि साष्टदन्तानि, अष्टसङ्ख्यानि शिरांसि अष्टशिरांसि, साष्टदन्तानि च तानि अष्टशिरांसि च साष्टदन्ताष्टशिरांसि, चतुष्पष्टिगुणीकृतानि साष्टदन्ताष्टशिरांसि येषां ते चतुष्पष्टिसाष्टदन्ताष्टशिरसः अत्र मध्यपदलोपी समासो ज्ञेयः, अष्टानां च चतुष्पष्ट्या गुणने द्वादशोत्तराणि पञ्चशतानि शिरांसि प्रतिगजं स्युरिति । तथैवैकस्मिन् दन्तेऽष्टाष्टपुष्करिण्य इति ॥ ५३ ॥

तथा—'ण्हवण विलेवणे'तिगाथात्रये ध्वजाष्टमङ्गलकौ न दृश्येते, साम्प्रतं तु पूजावसरे तौ क्रियेयातां, तत्र किं कारणमिति ? **प्रश्नोऽत्रोत्तरं**–ण्हवणविलेवणेत्यादिगाथामध्ये ध्वजाष्टमङ्गलकयोरुपलक्षणेन ग्रहणं बोध्यं, यत आत्मीयानामविच्छिन्नपरम्परागतः स्नात्रादिविधिर्निर्मूलो न भवतीति सम्भाव्यत इति ॥ ५४ ॥

तथा—श्रीमदर्हतां जन्ममहोत्सवकरणे देवानां देहानि कियन्मात्रोच्चैस्तराणीति **प्रश्नोऽत्रोत्तरं**–महोत्सवावसरे देवानां देहान्यभिषिच्यमान-जिनसमानकालीनमनुजशरीरोचितानि सम्भाव्यन्त इति ॥ ५५ ॥

तथा—चतुर्मासकमध्ये 'सक्कोसं जोअणं भिक्खायरिआए गंतुं पडिनिअत्तए' इत्युक्तं श्रीकल्पसूत्रे, एतदनुसारेण चैत्यगुर्वादि-वन्दनाद्यर्थं गन्तुं कल्पते न वा ? इति **प्रश्नोऽत्रोत्तरं**–'भिक्खायरिआए' इत्येतत्पदं चैत्यगुरुवन्दनाद्यर्थं गमनस्योपलक्षणपरमवसीयते, यत आवश्यकहारिभद्र्यां द्विक्रियनिह्नवस्य शरत्काले नद्युत्तरणपुरस्सरं गुरुवन्दनादि दृश्यते, परं प्रवृत्तिर्नास्तीति ॥ ५६ ॥

तथा—सर्व्वत्र प्रत्याख्याने 'अन्नत्थणाभोगेणं' इत्याद्याकारोच्चारणं प्रोक्तमस्ति, परं 'पाणस्स लेवेण वा' इत्यादिषु कथं तन्नेति ?

प्रश्नोऽत्रोत्तरं–' पाणस्स लेवेण वा ' इत्यत्र ' अन्नत्थणाभोगेणं ' इत्याद्याकारानुच्चारणे हेतुः शास्त्रे दृष्टो न स्मरति, षडावश्यकसूत्रमध्येऽपि तद्रहित एव पाठो दृश्यत इति ॥ ५७ ॥

तथा—शरीरास्वाध्यायकारणे सत्यनूढमहानिशीथयोगस्य साधोस्समीपे श्राविका उपधानक्रियां करोति न वा? इति, प्रश्नोऽत्रोत्तरं—शरीरास्वाध्यायकारणेऽपि महानिशीथयोगवाह्यन्तिक एवोपधानक्रियां करोति नान्यस्य पार्श्वे इति ॥ ५८ ॥

तथा—श्रीतीर्थकृता समवसरणाभावे व्याख्यानावसरे चतुर्मुखत्वं स्यान्न वेति प्रश्नोऽत्रोत्तरं–तीर्थकृतां 'दानशीलतपोभावे' ति श्लोकवृत्त्यनुसारेण समवसरणे देशनावसरे चतुर्मुखत्वं सम्भाव्यत इति ॥ ५९ ॥

तथा—'अंतमुहुत्तठिईओ, तिरियनराणं हवंति लेसाओ ' एवं युगलिनामपि तथैव लेश्यास्थितिकालोऽन्यथा वेति? प्रश्नोऽत्रोत्तरं–युगलिनामप्यन्यतिर्यङ्मनुष्यवदान्तमौहूर्त्तिको लेश्यास्थितिकालो ज्ञेयः, प्रज्ञापनावृत्त्यादिष्वविशेषेण तथाऽभिधानादिति ॥ ६० ॥

तथा—तथा यथा सूक्ष्मनिगोदस्य क्षुल्लकभवः बादरनिगोदस्यापि ते (भवाः) प्रोच्यन्ते न वा इति? प्रश्नोऽत्रोत्तरं–सूक्ष्मनिगोदस्येव बादरनिगोदस्यापि क्षुल्लकभवास्सम्भाव्यन्त इति ॥ ६१ ॥

तथा—सङ्ग्रहण्या नरद्वारे 'गब्भे मुहुत्त बारस, इअरे चउवीस विरह उक्कोसो ' इत्यत्र नरलोके सततगर्भजमनुजसद्भावे संमूर्च्छिममनुजाना कथं विरहः स्यादिति, प्रश्नोऽत्रोत्तरं–मनुष्यलोके निरन्तरगर्भजमनुजसद्भावेऽपि चतुर्विंशतिमुहूर्त्तावधि सम्मूर्च्छिममनुजाना विरहकालः कदाचित्सम्भवति, यतः पूर्वोत्पन्नानां ( उत्पद्यमानानां ) चान्तर्मुहूर्त्त ( स्थितिक ) त्वेन तत्पर्यन्ते सर्वेषां निर्लेपनादिति जीवसमासवृत्तावुक्तत्वेनेति ॥ ६२ ॥

तथा—क्षुल्लकभवविचारे २५६ आवलीभिरेकः क्षुल्लकभवः, ३७७३ अंशैश्च क्षुल्लकभवः प्रोक्तः, एकस्यामावलिकायां च ३७७३

अंशा भवन्तीति, तदत्र सप्तत्रिंशच्छतत्रिसप्तत्यंशेषु स्थानद्वयेऽपि किंलक्षणः कालः प्रोच्यते ? इति **प्रश्नोऽत्रोत्तरं**—२५६ आवलीमितक्षुल्लक-भवविचारे उच्छ्वासमुहूर्त्तादिषु क्षुल्लकभवा आवलिकाश्च सङ्ख्यातुमिष्टाः, मुहूर्त्ते च त्रिसप्तत्यधिकसप्तत्रिंशच्छतमिता उच्छ्वासा भवन्ति, तेन गण-नसौकर्यार्थं ३७७३ मित एव भाजकराशिः परिकल्पितः, तत्मानकालस्तु आवलिकागतांशेष्वसङ्ख्येयसमयात्मकः क्षुल्लकभवांशेषु तु ततः षट्पञ्चाशदधिकद्विशतगुणो, यतः २५६ आवलीभिरेकः क्षुल्लकभवो भवतीति ॥ ६३ ॥

**तथा**—श्रीवीरतीर्थकृतो द्विसप्ततिवर्षाण्यायुर्मानमुक्तं, तज्जन्मदिनाद्वा गर्भोत्पत्तेर्वा तदायुर्विचार्यमाणं मिथो विघटते तत्किमिति, **प्रश्नोऽत्रोत्तरं**—जन्मपत्राद्यपेक्षया तु जन्मतः, परमार्थतस्तु गर्भोत्पत्तित आयुःपरिमाणं गण्यते, द्वासप्तत्यादिवर्षमानप्रतिपादनं तु न्यूनाधिक-मासदिवसानामविवक्षणान्न विसंवदतीति ॥ ६४ ॥

**तथा**—अनाहारे निम्बादिकं प्रोक्तमस्ति तदार्द्रं सत्तत्र कल्पते न वा ? इति **प्रश्नोऽत्रोत्तरं**—अनाहारे निम्बादिकमार्द्रमपि कल्पत इति ॥ ६५ ॥

**तथा**—वटार्कपञ्चाङ्गुलानां पत्राणि त्रोटितानि स्वयंपतितानि वा मुहूर्त्तादूर्ध्वमचित्तीभवन्ति न वेति ? **प्रश्नोऽत्रोत्तरं**—'बिंटंमि मिलाणंमी, नायव्वं जीवविप्पजढ' मिति वचनाद्वृन्ते म्लाने सति वनस्पतिपत्राणि त्रोटितानि स्वयंपतितानि वाऽचित्तीभवन्ति, न तु कालनियमः प्रोक्तोऽस्तीति ॥ ६६ ॥

**तथा**—'मज्जे महुम्मि मंसंमि, नवणीयंमि चउत्थए । उप्पज्जंति असंखा, तव्वण्णा तत्थ जंतुणो ॥ १ ॥' इत्यत्र मद्यादिचतुष्के ये जीवा उत्पद्यन्ते, ते कियदिन्द्रिया इति, **प्रश्नोऽत्रोत्तरं**—मद्ये मधुनि नवनीते च द्वीन्द्रियाः, मांसे एकेन्द्रिया बादरनिगोदरूपा द्वीन्द्रियाश्च, मनुष्य-मांसे तु एकेन्द्रिया बादरनिगोदरूपा द्वीन्द्रियाः सम्मूर्च्छिममनुष्यपञ्चेन्द्रियरूपाश्च सम्मूर्च्छन्तीति शास्त्रानुसारेण सम्भाव्यत इति ॥ ६७ ॥

तथा—मांसाधिकारे योगशास्त्रे ' सद्यःसंमूर्च्छितानन्तजन्तुसन्तानदूषित ' मित्यत्रानन्तजीवाः के इति प्रश्नोऽत्रोत्तरं—तत्रानन्ता
निगोदजीवा इति योगशास्त्रे प्रोक्तमस्ति ॥ ६८ ॥
तथा—'संसजज्जीवसङ्घातं, भुञ्जाना निशि भोजनं' इति वचनात्कैश्चिच्चत्वारोऽप्याहारास्सदृशाः कथ्यन्ते, परमत्र किमप्यन्तरं न वा ? इति
प्रश्नोऽत्रोत्तरं—जीवसंसक्तिस्सर्व्वेष्वशनेष्वपि समाना न भवतीति ॥ ६९ ॥
तथा—पौषधोच्चारपाठे ' देसओ ' इति पदमाहारपौषध एव वर्त्तते, न तु शरीरसत्कारादिपौषधेषु, तेन स्वयं स्वशरीरे वैयावृत्त्यविले-
पनादेः करणं कारापणं च कल्पते न वा ? इति प्रश्नोऽत्रोत्तरं—पौषधिकानां कारणमन्तरेण स्वयं विलेपनादि कर्त्तुं कारयितुं च न कल्पते, यद्यन्यः
कश्चिद्भक्त्या करोति तदा कल्पतेऽपीति ॥ ७० ॥
तथा—देवानामवध्यादिज्ञानसद्भावात् पूर्व्वाधीतमनधीतं वा चतुर्दशपूर्व्वादिश्रुतं सम्भवति न वा ? इति प्रश्नोऽत्रोत्तरं—देवानामवध्यादिज्ञान-
सद्भावे प्राय एकादशाङ्गरूपं श्रुतं स्मरति, न शेषं, यदुक्तं महाभाष्ये तद्वृत्तौ च—" चोद्दसपुव्वी मणुओ, देवत्ते तं न संभरइ सव्वं । देसंमि
होइ भयणा, सट्ठाणभवेऽवि भयणा उ ॥ १ ॥ ' इह कश्चिच्चतुर्दशपूर्व्वधरः साधुर्मृत्वा देवलोकं गतः, तत्र च देवत्वे तत् पूर्व्वाधीतं श्रुतं न
स्मरति, कियन्न स्मरतीत्याह—' सर्व्वं ' कृत्स्नमशेषमिति यावद्देशे पुनरेकादशाङ्गलक्षणे इति कल्पचूर्णिः, कोट्याचार्यव्याख्यानं तु देशे सूत्रार्थे
सूत्रमात्रादौ वेति, इदं पूर्व्वगतसूत्रापेक्षं सम्भाव्यते, अन्यथा कल्पेन सह विरोधप्राप्तेः, भजना-विकल्पना भवति, यथोक्तं देशं स्मरत्यपीत्यर्थः, किं
देवत्वप्राप्तस्यैवेत्थं श्रुतस्य प्रतिपात आहोश्विदिह भवेऽपीत्याह—'स्वस्थाने' मनुष्यत्वे योऽसौ भवो-जन्म तत्रापि तिष्ठतो भजना-विकल्पना, मिथ्या-
त्वगमनादिभिः कारणैः कस्यचित्प्रतिपतति श्रुतं कस्यचिन्नेति विशेषावश्यकटीकायां मलधारिहेमसूरिकृतायामिति ॥ ७१ ॥

**तथा**—सिद्धिशिलाया उपरिस्थं योजनं प्रमाणाङ्गुलेन किमपरेण वेति ? **प्रश्नोऽत्रोत्तरं**–सिद्धिशिलाया उपरिस्थं योजनमुत्सेधाङ्गुलेन न तु प्रमाणाङ्गुलेनेति बोध्यम् ॥ ७२ ॥

**तथा**—देवलोकपुस्तकेषु किं लिपीकृतमस्ति ? किमभिधानं तच्छास्त्रमिति **प्रश्नोऽत्रोत्तरं**–देवलोकपुस्तकेषु लिपीकरणं तत्रत्यव्यवहार-माश्रित्य सम्भाव्यते, तदभिधानं तु कुत्रापि दृष्टं नास्तीति ॥ ७३ ॥

**तथा**—नवीनदीक्षितस्य साधोः श्री तातपाददीक्षाभवनानन्तरमचित्तरजओहडावणिअकायोत्सर्गे विस्मृते पुनर्दीक्षां दत्त्वाऽऽवश्यकादियोगा-नुष्ठानमुपस्थापना च शुद्ध्यति नवेति **प्रश्नोऽत्रोत्तरं**–गच्छनायकदीक्षाभवनानन्तरमचित्तरजओहडावणिअकायोत्सर्गे विस्मृते पुनर्गच्छनायक-दीक्षामन्तरेणाऽऽवश्यकादियोगानुष्ठानमुपस्थापना च न शुध्यतीति ॥ ७४ ॥

**तथा**—विहृतपात्रकाणि पुनर्लेपितानि चतुर्मासके विहृतानि कल्पन्ते न वा ? इति **प्रश्नोऽत्रोत्तरं**–पूर्वविहृतपात्रकाणि पुनर्लेपितानि चतुर्मा-सके विहृतानि कल्पन्त इति ॥ ७५ ॥

**तथा**—शय्यातरगृहान्नगृहीतुर्यथाऽऽचाम्लं प्रायश्चित्तं दीयते; तथा तद्भोक्तॄणामपि दीयते न वा इति **प्रश्नोऽत्रोत्तरं**–ग्रन्थे तु शय्यातर-पिण्डभोगे इति सामान्येनाचाम्लमुक्तमस्ति, परमिदानीं परम्परया तद्ग्राहकस्याचाम्लं प्रदीयत इति ॥ ७६ ॥

**तथा**—वसतिस्वामिनि देवलोकं गते कः शय्यातरः स्यादिति **प्रश्नोऽत्रोत्तरं**–स्वामित्वेन यः तच्चिन्ताकारी स एव शय्यातरो भवतीति ॥ ७७ ॥

**तथा**—उपाश्रये वलिकास्तम्भचन्द्रोदयमोचकस्य शय्यातरोऽथवा भूमिकाधिपतेरिति **प्रश्नोऽत्रोत्तरं**—शास्त्रानुसारेण सर्वेषां शय्यातरो भवति, परं साम्प्रतं श्राद्धैर्यावतां शय्यातरनामानि लिखितानि तावन्तः शय्यातरा भवन्तीति ॥ ७८ ॥

तथा—केनचिदुपाश्रये धनं दत्तं, तस्य चत्वारस्तनया भवन्ति, तस्मिन्नुपरते ते पृथग्भूतास्तदा सर्व्वेऽपि शय्यातरा भवन्त्यथवैक इति
प्रश्नोऽत्रोत्तरं—यावन्तस्तदालयस्य स्वामित्वभाजस्तावन्त एव शय्यातरा इति ॥ ७९ ॥
तथा—पांसरू इति नाम्ना प्रसिद्धस्य दुग्धस्य भक्षणे कोऽपि दोषो न वेति प्रश्नोऽत्रोत्तरं—लोकोक्त्या दोषः श्रूयते, न त्वात्मीय-
शास्त्रानुसारेणेति ॥ ८० ॥
तथा—षष्ठकरणशक्त्यभावे पञ्चम्युपवासः पञ्चम्यां विधीयतेऽथवा पर्युषणाचतुर्थ्यामिति प्रश्नोऽत्रोत्तरं—पर्युषणायामुपवासे कृतेऽपि
शुध्यति, श्रीहरिविजयसूरिप्रसादितप्रश्नसमुच्चयेऽपि तथैवोक्तत्वादिति ॥ ८१ ॥
तथा—यथा प्रस्थादिना कश्चित्सर्व्वधान्यानि मिनुयादेवमसद्भावप्रज्ञापनाङ्गीकरणाल्लोकं कुडवीकृत्य जघन्योत्कृष्टावगाहनान् पृथवीका-
यिकान् जीवान् यदि मिनोति ततः पृथिवीकायिका असङ्ख्येयान् लोकान् पूरयन्तीत्याचाराङ्गप्रथमश्रुतस्कन्धप्रथमाध्ययनद्वितीयोद्देशकवृत्तौ,
स्थावरचतुर्णां तु अङ्गुलासङ्ख्येयभागप्रमितिरवगाहनोक्ता, अत एते पृथवीकायिकाः कथं पूरयन्तीति प्रश्नोऽत्रोत्तरं—प्रस्थदृष्टान्ते
सामान्योक्तावपि प्रत्याकाशमेकैकपृथिवीकायिकजीवकल्पनया लोकरूपपल्यभरणं सम्भाव्यते, अन्यथा प्रज्ञापनासूत्रवृत्यादिग्रन्थान्तर-
विरोध इति ॥ ८२ ॥
तथा—तिरश्चां वैक्रियशरीरकरणं मूलशरीरेण सह सम्बन्धमसम्बन्धं च स्यादिति, प्रश्नोऽत्रोत्तरं—सम्बद्धमसम्बद्धं च भवतीति ॥ ८३ ॥
तथा—ज्ञानद्रव्यं देवकार्ये उपयोगि स्यान्न वा ? यदि स्यात्तदा देवपूजायां प्रासादादौ वा इति—प्रश्नोऽत्रोत्तरं—'एकत्रैव स्थानके देवारिक्तं

क्षेत्रद्वय्यामेव तु ज्ञानरिक्तं । सप्तक्षेत्र्यामेव तु स्थापनीयं, श्रीसिद्धान्तो जैन एवं ब्रवीति ॥ १ ॥ एतत्काव्यमुपदेशसप्ततिकाप्रान्तेऽस्ति, एतदनुसारेण ज्ञानद्रव्यं देवपूजायां प्रासादादौ चोपयोगि भवतीति ॥ ८४ ॥

**तथा**—सौधर्मादिदेवा मनुष्यतिर्यङ्मध्येऽमुकस्थानके उत्पत्स्यामहे ईदृशं जानन्ति न वा ? इति **प्रश्नोऽत्रोत्तरं**–केचन तथाविध-ज्ञानसद्भावाज्जानन्ति, केचित्तु तदभावान्न जानन्त्यपीति ॥ ८५ ॥

**तथा**—प्रातः प्रतिक्रमणे तपसः कायोत्सर्गमध्ये ' उपवासाद्यमुकं तपः करिष्ये ' ईदृशं विचिन्त्य कायोत्सर्गं पारयति, पश्चात्कस्य-चिदाग्रहाच्चिन्तितादन्यत्तपः करोति, तस्य प्रत्याख्यानभङ्गो लगति नवेति **प्रश्नोऽत्रोत्तरं**–प्रत्याख्यानभङ्गो न लगतीति ॥ ८६ ॥

**तथा**—स्त्रीरत्नं निदानबद्धमनिदानबद्धं वा स्यादिति, **प्रश्नोऽत्रोत्तरं**–उभयथाऽपि स्यादिति, विशेषानभिधानादिति ॥ ८७ ॥

**तथा**—देशविरत्या चक्रिपदं लभ्यते न वा ? तथा चक्रिणां गार्हस्थ्ये देशविरतिः स्यान्न वा ? यदि सा न स्यात् तत्र को हेतुरिति **प्रश्नोऽत्रोत्तरं**–देशविरत्या चक्रवर्तिपदप्राप्तिर्भवति न भवति वेत्येकान्तो ज्ञातो नास्ति, तथा चक्रिणां महापरिग्रहित्वाद्देशविरतेरप्राप्तिः स्यादिति ॥ ८८ ॥

**तथा**—तीर्थकरगणभृतां मिथो भिन्नवाचनत्वेऽपि साम्भोगिकत्वं भवति न वा ? तथा सामाचार्यादिकृतो भेदो भवति न वा इति **प्रश्नोऽत्रोत्तरं**–गणभृतां परस्परं वाचनाभेदेन सामाचार्या अपि कियान् भेदस्सम्भाव्यते, तद्भेदे च कथञ्चिदसाम्भोगिकत्वमपि सम्भाव्यत इति ॥८९॥

**तथा**—जिनकल्पिकास्तद्भवे मोक्षं यान्ति न वा ?, चेन्न यान्ति तत्र किं निदानमिति **प्रश्नोऽत्रोत्तरं**–जिनकल्पिकास्तद्भवे मोक्षं न यान्ति, यतः " न करिंति आगमं ते, इत्थीवज्जो उ वेद इक्कतरो । पुव्वपडिवन्नओ पुण, होज्ज सवेओ अवेओ वा ॥ १ ॥ " न कुर्वन्ति आगमम्-अपूर्वश्रुताध्ययनं, पूर्वाधीतं तु श्रुतं विश्रोतसिकाक्षयहेतोरेकाग्रमनाः सम्यगनुस्मरति । वेदमङ्गीकृत्य प्रतिपत्तिकाले स्त्रीवर्ज्ज एकतरः पुरुषवेदो

नपुंसकवेदो वाऽसंक्लिष्टस्तस्य भवेत्, पूर्व्वप्रतिपन्नः पुनः सवेदोऽवेदो वा भवेत्, तत्र जिनकल्पिकस्य तद्भवे केवलोत्पत्तिप्रतिषेधादुपशमश्रेण्या वेदे
उपशमिते सति अवेदकत्वम्, तदुक्तं—" उवसमसेढीए खलु, वेदे उवसामिअंमि उ अवेदो । न उ खविए तज्जम्मे, केवलपडिसेहभावाओ ॥ १ ॥"
शेषकालं तु सवेद इति बृहत्कल्पवृत्तौ उक्तत्वादिति ॥ ९० ॥

तथा—भाविद्वितीयतृतीयतीर्थकृतो रुदायिसुपार्श्वजीवयोरन्तरकालस्याल्पत्वाद्वैमानिकदेवगतिः न सङ्गच्छते, नरकगतिरपि तयोस्तथाविधयोर्न
सङ्गच्छते, न च भवनपत्यादिगतिः, तत आगतानां तीर्थकरत्वप्राप्तिनिषेधात्तत्का गतिरिति प्रश्नोऽत्रोत्तरं—अनयोर्गतिः शास्त्रे श्रुता नास्ति,
तत्त्वं तु तत्त्वविद्वेद्यमिति ॥ ९१ ॥

तथा—आमलकग्रन्थिककरीरजीरकमिश्रितवस्तुपिप्पलीहरितक्य एतानि वस्तून्याचाम्लमध्ये कल्पन्ते न वेति प्रश्नोऽत्रोत्तरं—एतानि वस्तून्या-
चाम्लमध्ये न कल्पन्ते धामस्थानामिति, यतीनां तु जीरकमिश्रितं पर्प्पटिकादिकं कल्पतेऽपीति प्रवृत्तिः ॥ ९२ ॥

तथा—यथाऽत्र भरते श्रीवीरजन्मर्क्षे भस्मग्रहस्तथाऽन्यक्षेत्रे तीर्थकृतां जन्मर्क्षे स आगतोऽस्ति नवा?, तथाऽत्र यथा कुमतबाहुल्यं तथाऽन्य-
क्षेत्रेष्वपि तथैव न वा इति प्रश्नोऽत्रोत्तरं—दशस्वपि क्षेत्रेषु तीर्थकृतां च्यवनादीनि कल्याणकान्येकस्मिन्नेव नक्षत्रे भवन्तीत्यागमोक्तत्वाद्भस्मग्रहादि-
सङ्क्रमणं सर्व्वं समानमेवेति ॥ ९३ ॥

तथा—एतानि दशाश्चर्याण्यत्रैव भरते भवन्ति दशसु क्षेत्रेषु वेति प्रश्नोऽत्रोत्तरं—दशस्वपि क्षेत्रेषु दश दश भवन्ति, तत्र कानिचिदेतानि
कानिचिद्भिन्नानीति ॥ ९४ ॥

तथा—फटकडीहिङ्गुलसैन्धवाः कथं सचित्ता अचित्ता वेति प्रश्नोऽत्रोत्तरं—फटकडीसैन्धवयोर्दूरदेशादागतत्वेनाचित्तत्वं, तथा हिङ्गुलस्तु दूरादागतो अकर्मीपुरनिष्पन्नश्च प्रासुकः, परमाचरणावशात्परिकर्म्मित एव गृह्यत इति ॥ ९५ ॥

## अथ पण्डितश्रीहापर्षिगणिकृतप्रश्नास्तदुत्तराणि च ।

यथा—मेरुगिरौ विकलेन्द्रियसद्भावोऽस्ति न वेति प्रश्नोऽत्रोत्तरं—' कहि णं भंते ! बेंदिआणं पज्जत्तापज्जत्तगाणं ठाणा पन्नत्ता ?, गोअमा ! उड्ढलोए तदेक्कदेसभाए ' इति प्रज्ञापनासूत्रं एतद्वृत्त्येकदेशो यथा—'ऊर्ध्वलोके तदेकदेशभागे मन्दरादिवाप्यादिष्वित्यादि एवं त्रीन्द्रियादिसूत्राण्यपि सवृत्तिकानि भावनीयान्ये' तदक्षरानुसारेण मेरौ विकलेन्द्रियादिसद्भावस्सम्भाव्यते ॥ ९६ ॥

तथा—सौधर्म्मादिषु वापीकमलानां वनस्पतीत्वं सम्भाव्यते ऽन्यथा वेति प्रश्नोऽत्रोत्तरं—' कहि णं भंते ! बादरवणस्सइकाइआणं पज्जत्तगाणं ठाणा पन्नत्ता ?, गोअमा ! उड्ढलोए कप्पेसु विमाणेसु विमाणावलिआसु विमाणपत्थडेसु ' एतदक्षरानुसारेण कल्पेषु वनस्पतीनां सद्भावः, स च तद्गतवाप्यादिकमलादीनां केषांचिद्वनस्पतित्वे सत्येव सम्भवतीति ॥ ९७ ॥

तथा—ये भव्या व्यवहारिणो जातास्तेषां सिद्ध्यवाप्तौ कालनियमोऽस्ति नवेति प्रश्नोऽत्रोत्तरं—भव्यानां व्यवहारित्वभवनानन्तरं भवभावनावृत्त्याद्यनुसारेणोत्कर्षतोऽनन्तपुद्गलपरावर्त्तपरिभ्रमणानन्तरं सिद्ध्यवाप्तिर्दृश्यत इति ॥ ९८ ॥

तथा—देवलोके मिथ्यात्विदेवदेवीनां क आचार इति प्रश्नोऽत्रोत्तरं—यथा सम्यग्दृशां सिद्धायतनेषु जिनार्चार्चनादिप्रवृत्तिरूप आचारः तथा मिथ्यादृशां तत्रैव वर्त्तमाननागादिप्रतिमापूजनादिरूपस्सम्भाव्यत इति ॥ ९९ ॥

तथा—सरस्वती ब्रह्मचारिणी न वा इति प्रश्नोऽत्रोत्तरं–क्षेत्रसमासवृत्त्यनुसारेण भगवतीसूत्रानुसारेण च सरस्वती गीतरतिनाम्नो व्यन्तरेन्द्रस्याग्रमहिषीति ज्ञायते, तेन सा ( न ) ब्रह्मचारिणी प्रोच्यत इति ॥ १०० ॥

तथा—निष्कारणं सन्नोपभुजां जघन्यतोऽपि चारित्रं स्यान्न वेति प्रश्नोऽत्रोत्तरं " जं किंचिवि पूइकडं, सड्ढीमागंतुमीहितं । सहस्संतरिअं भुंजे, दुपक्खं चेव सेवई ॥ १ ॥" इत्यादिश्रीसूत्रकृदङ्गादिवचनप्रामाण्यान्मुख्यतस्तदभावः, परं सशूकनिःशूकादिपरिणामभेदेन गूढागूढालम्बननिरालम्बनत्वेन केषाञ्चित्कथमपि स्यादपि न स्यादपि केषाञ्चिदत एव पार्श्वस्थादिष्वपि देशसर्वभेदेन भूयानधिकारः सिद्धान्ते प्रोक्तोऽस्तीति ॥ १०१ ॥

तथा—योनिविचारे यत्र मनुष्योत्पत्तिस्तत्रैव द्वीन्द्रियादीनामुत्पत्तिर्दृश्यते, तथा च योनिसङ्करः स्यादिति, प्रश्नोऽत्रोत्तरं–मनुष्यद्वीन्द्रियादीनां योन्येकत्वेऽपि स्वस्वजातावेव योन्येकत्वव्यवहारो न तु भिन्नजातौ, अत एव छगणादिष्वप्युत्पन्नानां भूयसां कुन्थूनां द्वीन्द्रियादीनां स्वजात्यपेक्षया योन्येकत्वं, भिन्नजातीयानामपि तत्रोत्पन्नानां स्वजात्यपेक्षयैकयोनिकत्वं, तेन न योनिसङ्करः सम्भाव्यत इति ॥ १०२ ॥

तथा—योगमध्ये, रात्रावनाहारग्रहणं भवति न वेति प्रश्नोऽत्रोत्तरं–रात्रौ योगिनां सङ्घट्टकाभावात्किमपि ग्रहीतुं न कल्पते, सङ्घट्टकं तु सायं मुक्तमिति प्रातः प्रवचनप्रवेदनानन्तरमेव तद्ग्रहणं कल्पत इति ॥ १०३ ॥

तथा—देवानां कुलकोटयो बह्व्यो लिखिता इति तत्र के जीवास्सन्तीति प्रश्नोऽत्रोत्तरं–यथा मनुष्येष्विक्ष्वाकुकुलादीनां अनैयत्यात्समानस्वरूपत्वेऽपि तत्सम्भवस्तथा देवेष्वपीति न काचिदनुपपत्तिरिति ॥ १०४ ॥

तथा—सामग्रीमन्तरा कश्चित् स्वयं चारित्रं गृहीत्वा पालयति तदा तस्य किं फलं भवतीति प्रश्नोऽत्रोत्तरं–स्वयंचारित्रग्रहणं शास्त्रन्यायेन स्वयम्बुद्धप्रत्येकबुद्धौ विना न कल्पते, यदि च कश्चित्स्वयं कुमार्गत्यागाद्वैराग्येण तद्ग्रहणं करोति तदा निर्ज्जरादि फलं सम्भवतीति ॥ १०५ ॥

तथा—यथा तिरश्चां गुरुसमक्षं प्रायश्चित्तं विनाऽपि शुद्धिर्जायते, तथा नृणां सा कथं न भवतीति प्रश्नोऽत्रोत्तरं—तिरश्चां गुरुसमक्षं प्रायश्चित्तं विना शुद्धिर्भवति, तथाविधसामग्र्यभावात्, मनुष्याणां प्रायः तथाविधसामग्रीसद्भावात् तद्विना न शुद्धिः; अत एव गुर्वाद्ययोगे तत्परिणामवतां तदग्रहणेऽपि शुद्धिः, तद्योगे च तदगृह्णतां तत्परिणामाभावादशुद्धिरिति ॥ १०६ ॥

तथा—विदिक्स्थाकाशप्रदेशानां दिक्स्थाकाशप्रदेशस्पर्शनं भवति न वा ?, यदि भवति तदैकाकाशप्रदेशस्याष्टप्रदेशस्पर्शना भवति, शास्त्रे च षट्प्रदेशस्पर्शनोक्ता, तथा न भवति तदा अन्तरा किमस्तीति सयुक्तिकं प्रसाद्यमिति, प्रश्नोऽत्रोत्तरं—आकाशप्रदेशानां विदिक्स्थाकाशप्रदेशैः सर्वथा सम्बन्धो न भवति दिक्स्थाकाशप्रदेशैरेव तत्पर्यवसानात्, अयं चार्थो द्वित्र्यादिपङ्क्तिमण्डिताभिस्सम्यक् समकोणचतुरस्त्रयष्टिष्टकाभिस्सुबोधो भवतीति ॥ १०७ ॥

## अथ पण्डितनगर्षिगणिकृतप्रश्नास्तदुत्तराणि च

यथा—उत्कालितदुग्धमध्ये प्रक्षिप्तगोधूमादिचूर्णचिप्पटिकया तद्दुग्धं निर्विकृतिकं स्यान्न वेति प्रश्नोऽत्रोत्तरं—गोधूमादिचूर्णे प्रक्षिप्ते सति यद्दुग्धमेकरसं वर्णान्तरादिप्राप्तं च भवति तन्निर्विकृतिकं भवतीति ॥ १०८ ॥

तथा—निर्विकृतिकदुग्धजं दधि निर्विकृतिकं विकृतिर्वेति प्रश्नोऽत्रोत्तरं—एवंविधं दुग्धजं दध्यपि निर्विकृतिकं स्यात् ॥ १०९ ॥

तथा—भ्रक्षणतापनसमये प्रक्षिप्तचूर्णचिप्पटिकं घृतं निर्विकृतिकं विकृतिकं वेति प्रश्नोऽत्रोत्तरं—तद् घृतं निर्विकृतिकं न स्यादिति यतो 'दुद्धदही चतुरङ्गुले' त्यादि वचनादिति बोध्यम् ॥ ११० ॥

तथा—श्राद्धो देवपूजार्थं स्नानं करोति तदा शिरः प्रक्षालयति किंवा कंकसिकया शिरोजसंस्कारेण सरतीति, प्रश्नोऽत्रोत्तरं—देवार्चां कुर्वाणः श्राद्धसामग्र्या सत्या सर्वाङ्गस्नानं करोति, तदभावे तु कंकसिकया शिरोजसंस्कारपूर्वकं कण्ठस्नानेनापि सरत्याचारप्रदीपे तथैवोक्तत्वादिति ॥ १११ ॥

तथा—पद्मावती किं धरणेन्द्रपत्नी उतान्याऽपरिगृहीतेति प्रश्नोऽत्रोत्तरं—पद्मावती धरणेन्द्रस्याग्रमहिषी न तु साधारणेति ॥ ११२ ॥

तथा—श्रीवीरो द्वाविंशे भवे राजा त्रयोविंशे भवे चक्री, चक्रिणो देवनारकागता भवन्त्यन्यतो वेति ? प्रश्नोऽत्रोत्तरं—आवश्यकवीरचरित्राद्यनुसारेण सिंहभवानन्तरं नारकभवादुद्धृत्य तिर्यङ्मनुष्यादिभवेषु भ्रान्त्वा चक्री जातो, राजभवस्तु स्तोत्रेष्वेव दृश्यते, नान्यत्र, तेनादिशब्दग्रहणात्सुरादिभवोऽपि सम्भाव्यत इति ॥ ११३ ॥

तथा—गर्भस्थितिविचारे 'दु चउत्थत्ति' गाथाधिकारे सप्तमाजिनस्याष्ट मासा एकोनविंशतिर्दिनानि च तत्कथं घटते, 'दुचउत्थ' गाथायां षण्णां जिनानां अष्टमासादि कथितमस्ति, एवं तु सप्त जायन्त इति प्रश्नोऽत्रोत्तरं—'दुचउत्थ' इति गाथाया सप्तमस्थाने शेषजिनग्रहणं कृतमस्ति, तेन 'मासा अडनव' इत्यत्र षण्णामष्टौ मासाः शेषजिनानां च नव मासा उक्तास्सन्ति, तेन सप्तमजिनस्य नवमासा एकोनविंशतिर्दिनानि गर्भस्थितिरिति बोध्यम् ॥ ११४ ॥

तथा—'वीरस्सायङ्गुलं दुगुण'न्ति कथं ? सर्वे जिना विंशत्यधिकशताङ्गुलाः कथिताः प्रमाणाङ्गुलस्य पञ्चाशद्भागसत्कैकविंशतिभागदेहमानं वीरस्य कथितमस्ति, तेन चोत्सेधाङ्गुलैकशताष्टषष्टिमानं जायते, विंशतिशतद्विगुणीकरणे चत्वारिंशदधिकद्विशताङ्गुलानि स्युः, सार्द्धत्रयहस्तमाने तु पाश्चात्यमानं विसंवदतीति प्रश्नोऽत्रोत्तरं—'वीरस्सायङ्गुलं दुगुण'न्त्येतद्गाथावृत्तौ मतत्रयमस्ति, तत्रानुयोगद्वारचूर्ण्यभिप्रायेण श्रीवीर

आत्माङ्गुलेन चतुरशीत्यङ्गुलप्रमाणश्चतुरशीतिद्विगुणीकरणेऽष्टषष्ट्यधिकशतमुत्सेधाङ्गुलाना भवतीति न किञ्चिदनुपपन्नमेतद्राश्रित्य विस्तरस्तु सङ्ग्रहणीवृत्तावस्ति ॥ ११५ ॥

तथा—साधुभिर्वसतिप्रमार्जनानन्तरं श्राद्धाः प्रतिलेखनां कुर्वन्ति, तदा पुनरपि श्राद्धानां वसतिप्रमार्जनं मृग्यते न वेति प्रश्नोऽत्रोत्तरं—यतिभिर्वसतिप्रमार्जनानन्तरं श्राद्धानां प्रतिलेखनाकरणे काजकोद्धरणं कृतं विलोक्यत इति ॥ ११६ ॥

तथा—दशार्णभद्राधिकारे हस्तिमुखादिविकुर्वणा किमिन्द्रेण कृता किमुतैरावणदेवेन वेति प्रश्नोऽत्रोत्तरं—आवश्यकचूर्ण्याद्यनुसारेण हस्तिमुखादिसर्व्वमिन्द्रादेशादैरावणेन विचक्रे, आवश्यकवृत्त्याद्यनुसारेण तु तत्सर्व्वं स्वयं बिडौजसेति ॥ ११७ ॥

तथा—प्रसूतापत्या स्त्री कटुकमतीनां मासं यावन्न सङ्घट्टयति कस्यापि, न करोति च रन्धनक्रियां, आत्मीयानां तु दिनदशकं यावत्, तत्किमिति प्रश्नोऽत्रोत्तरं—प्रसूतापत्या स्त्री सङ्घट्टनादि दश दिनानि न करोतीति लोकरीतिः, तत्रापि देशविशेषे क्वचिन्न्यूनाधिकत्वमपि ॥११८॥

## अथ पण्डितविष्णवर्षिगणिकृतप्रश्नास्तदुत्तराणि च

यथा—सप्तदशभेदपूजाकरणं दिवसे शुद्ध्यति किं वा रात्रावपीति ? प्रश्नोऽत्रोत्तरं—सप्तदशभेदपूजाकरणं दिवस एव शुद्ध्यति, न तु रात्रौ, तीर्थादौ तु कदाचित् पूजाकरणं, तत्तु कारणिकमिति ॥ ११९ ॥

तथा—पाक्षिकप्रतिक्रमणमुखवस्त्रिकाप्रतिलेखनानन्तरं पौषधिकं विना प्रतिक्रमणसूत्रादेशो दत्तो शुद्ध्यति न वा इति ? प्रश्नोऽत्रोत्तरं—मुख्यवृत्त्या पौषधिकस्य दीयते इदृशं वृद्धवचोऽस्ति, परमेकान्तो ज्ञातो नास्तीति ॥ १२० ॥

तथा—पाक्षिकप्रतिक्रमणे क्षुत् कदा निवार्यते इति प्रश्नोऽत्रोत्तरं—चैत्यवन्दनादित आरभ्य शान्तिं यावत्क्षुन्निवार्यत इति परम्पराऽस्ति ॥ १२१ ॥

तथा—आश्विनास्वाध्यायमध्ये कृततपसो दिनत्रयमथवा द्वादश दिनान्युपधानालोचनायामन्यालोचनायां वा न समायान्ति ? इति प्रश्नोऽत्रोत्तरं—सप्तम्यादिदिनत्रयं गणनायां नायातीति ॥ १२२ ॥

तथा—पुनर्दीक्षितस्य प्रज्ञांशदत्ताऽऽलोचना शुद्धयति न वेति प्रश्नोऽत्रोत्तरं—योग्यतासद्भावे गुर्वाज्ञापूर्वकं शुद्धयतीति ॥ १२३ ॥

तथा—सिंहादिसङ्क्रान्तित्रयमध्ये तथा वर्तिकमासमध्ये च कानि धर्म्मकार्याणि शुद्धयन्ति ? कानि नेति प्रश्नोऽत्रोत्तरं—दीक्षाप्रतिष्ठादिकं न शुद्धयति, अन्यानि तु शुद्धयन्तीति ॥ १२४ ॥

तथा—जिनालये घौतिढौकनं करोति तत्कस्मिन् सूत्रे प्रकरणे वाऽस्ति, तथा कुमतिन इत्थं कथयन्ति—घौतिढौकनं देवनिर्माल्यं जायते, तस्य पुष्पादि लात्वा कथं चटापयन्तीति प्रश्नोऽत्रोत्तरं—घौतिढौकनमिति परम्परा ज्ञायते, तथा तन्निर्माल्यं न कथ्यते, यतो 'भोगविणट्ठं दव्वं निम्मल्लं बिंति गीअत्था' इति श्राद्धविधिवृत्तावुक्तत्वादिति ॥ १२५ ॥

तथा—स्वाध्यायचतुष्कं प्रत्यहं प्रोक्तमस्ति, तन्मध्ये कस्यचिदादौ क्षमाश्रमणद्वयं सज्झाय संदिसावुं सज्झाय करुं इति, कस्यचित्त्वेकं सज्झाय करुं इति, तस्य को हेतुरिति प्रश्नोऽत्रोत्तरं—तद्धेतुर्वृद्धाज्ञैवेति ज्ञायते ॥ १२६ ॥

तथा—आराधनप्रकरणं श्रीसोमप्रभसूरिभिः कृतं, तत् कस्य ग्रन्थस्यानुसारेणेति ? प्रश्नोऽत्रोत्तरं—आराधनापताकाचतुश्शरणादिग्रन्थस्यानुसारेण कृते (तमि) ति ॥ १२७ ॥

॥

तथा—अनादिनिगोदमध्ये यथा भव्यस्य ज्ञानदर्शनचारित्राणां सत्ता तथाऽभव्यस्य भवति न वेति प्रश्नोऽत्रोत्तरं—अभव्यस्य ज्ञानादिसत्ता भवति, परमभव्यतया सामग्रीसद्भावेऽपि न प्रकटीभवति, भव्यस्य तु तद्योगे सा प्रकटास्यादिति ॥ १२८ ॥

तथा—जातिनपुंसकगर्भजतिर्यङ्मनुष्यमध्ये सम्यक्त्वं प्राप्यते नवेति प्रश्नोऽत्रोत्तरं—जातिनपुंसकमध्ये सम्यक्त्वं देशविरतिश्च प्राप्यत इति आवश्यकादावस्तीति ॥ १२९ ॥

## अथ पण्डितरत्नचन्द्रगणिकृतप्रश्नास्तदुत्तराणि च ।

यथा—यत्सम्बन्धिप्रतिष्ठितं जिनबिम्बं वन्द्यं, तर्हि ते कथं न वन्द्या इति १, प्रश्नोऽत्रोत्तरं—" पासत्थो ओसन्नो, कुसीलसंसत्तओ अहाच्छंदो । दुग दुग ति दु णेगविहा, अवंदणिज्जा जिणमयंमि " ॥ १ ॥ इत्यादिवचनात्तेषामवन्द्यत्वं, प्रतिमानां त्वन्यतीर्थिकपरिगृहीतप्रतिमा-व्यतिरेकेणान्यासां वन्द्यत्वमस्तीति ॥ १३० ॥

तथा—अभिनिवेशमिथ्यादृक्प्रतिष्ठितं जिनबिम्बं वन्द्यतां प्राप्तं तत्र किं बीजमिति प्रश्नोऽत्रोत्तरं—आत्मपूर्व्वसूरिभिस्तद्वन्दनादौ अनिवारणमेव बीजं, किञ्च—शास्त्रेऽभिनिवेशमिथ्यादृष्टित्वं निह्नवानां प्रोक्तं, साम्प्रतीनास्तु मतिनो दिगम्बरं विहाय निह्नवा इति न व्यवह्रियन्ते, तथैव गुर्व्वादीनामाज्ञासद्भावादिति ॥ १३१ ॥

तथा—पञ्चदशस्वपि कर्म्मभूमिषु संवत्सरायनमासतिथिनामान्यमून्येवोत विशेषः तथा—वर्षादिऋतुभावेपि साम्यं उत कश्चिद्विशेष इति, प्रश्नोऽत्रोत्तरं—यथाऽत्र संवत्सरादिनामानि तथाऽन्यत्रापीति विज्ञायते, एवं वर्षादिऋतुभावेऽपीति ॥ १३२ ॥

तथा—अप्रतिष्ठितजिनबिम्बमर्च्चयतः पादादिनाऽऽशातयतो वा लाभालाभौ न वेति ?, लाभश्चेत्तर्हि प्रतिष्ठायाः किं प्रयोजनं इति प्रश्नोऽत्रोत्तरं—अप्रतिष्ठितप्रतिमानां वन्दने व्यवहारो नास्तीति कथं लाभः ?, आशातनाकरणे तु प्रत्यवायो भवत्येव, तासु तीर्थकराकारोपलम्भादिति ॥१३३॥

तथा—द्वादशजल्पपट्टे श्रीहीरविजयसूरिप्रसादितप्रश्नोत्तरग्रन्थे च मार्गानुसारीति कोऽर्थः ?, असद्ग्रहपरित्यागेन तत्त्वप्रतिपत्तिर्मार्गानुसारितेति वन्दारुवृत्तिगतोऽर्थः स एव ग्राह्योऽन्यो वेति ? प्रश्नोऽत्रोत्तरं—अभयदानादौ यस्मिन् धर्म्मकृत्येऽसद्ग्रहो नास्ति तद्धर्म्मकृत्यं मार्गानुसारि, यत्र त्वसद्ग्रहस्तन्न मार्गानुसारीति ज्ञातमस्ति, तथा "मग्गो आगमनीई, अहवा संविग्गबहुजणाइन्नं । उभयाणुसारिणी जा सा मग्गणुसारिणी किरिआ" १ ॥ श्रीदेवेन्द्रसूरिकृतधर्मरत्नप्रकरणवृत्तावस्या गाथायाः सविस्तरं व्याख्यानमस्तीति ॥ १३४ ॥

तथा—आवश्यकोत्तराध्ययनादियोगेषु पत्तनीयमुद्गगोधूममोदकान् केचन गृह्णन्ति, केचन नेति प्रश्नोऽत्रोत्तरं—न गृह्णन्तीति वृद्धपरम्परास्तीति ॥ १३५ ॥

तथा—हैमव्याकरणे 'व्यञ्जनात्पञ्चमान्तस्थायाः' इत्यत्र समाहारत्वात्कथं स्त्रीलिङ्गत्वं, यतः 'क्लीबे ह्रस्व' इत्यनेन ह्रस्वत्वं प्राप्नोतीति प्रश्नोऽत्रोत्तरं—सूत्रत्वादेव न ह्रस्वत्वमिति बोध्यम् ॥ १३६ ॥

तथा—'दध्यस्थिसक्थ्यक्ष्णोऽन्तस्यान्' इत्यत्रान्तग्रहणं किमर्थं ? 'षष्ठ्या निर्दिष्टं तदन्तस्ये' त्यनेनैव सिद्धेरिति प्रश्नोऽत्रोत्तरं—'अनेकवर्णः सर्वस्ये'ति परिभाषया सर्व्वस्याप्यादेशः स्यादित्यन्तग्रहणं, किञ्चैतत्सूत्रन्यासोक्तं यथा ननु दध्यस्थिसक्थ्यक्ष्णोऽन् स्यादिति क्रियतां किमन्तग्रहणेन ?, सत्यं, अन्तग्रहणाभावे 'अनन्तः पञ्चम्याः प्रत्यय' इत्यनेन अन् इत्यस्य प्रत्ययसंज्ञा स्यात्, तथा च 'अनोऽस्ये'ति अलोपे नस्य व्यञ्जनादित्वात् नामसिद्य्व्यञ्जने इत्यनेन पदत्वे दध्ना इत्यत्र धुटस्तृतीय इति धस्य दत्वं स्यादित्यन्तग्रहणं, तद्ग्रहणे च प्रत्ययसंज्ञा न स्यात् १३७

तथा—समासाधिकारे कर्म्मधारयसमासप्रयोजनं न प्रतिभाति, यतस्तस्य तत्पुरुषसमासात् पृथग्लक्षणाभाव इति प्रश्नोऽत्रोत्तरं—जरती चासौ गौश्च जरद्गवी इत्यत्र कर्म्मधारयसमासत्वात् 'पुंवत्कर्म्मधारये' इत्यनेन पुंवद्भावस्तत्पुरुषत्वाच्च 'गोस्तत्पुरुषादि' त्यट् समासान्तः, टित्वाच्च ङीप्रत्यय इत्येकत्र समासद्वयप्रयोजनसद्भावः, तथा "विशेषणं विशेष्येणैकार्थ्यं कर्म्मधारयश्चे"ति पृथग् लक्षणसद्भावाच्च न काप्यांशङ्केति॥ १२८॥

तथा—'तृस्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्त्रो' इत्यत्र प्रशास्तुरिति कथं न जातमिति, प्रश्नोऽत्रोत्तरं—प्रशास्तॄणां ऋः प्रशास्तॄः एवं कृते दीर्घत्वाद् 'ऋतो डुरि' त्यस्याप्राप्तिरित्थं वाक्यकरणं डुर्निषेधार्थमिति ॥ १२९ ॥

तथा—हैमलघुवृत्तौ 'णषमसदिति' सूत्रावयवरूपायां एतत्सूत्रनिर्दिष्टयोश्च णषयोः परे षे णोऽसन् स्यादित्यस्य को भावः कास्मिंश्च निदर्शने विषयः? इति प्रश्नोऽत्रोत्तरं—एतत्सूत्रनिर्देशापेक्षया णषयोर्मध्ये षकर्त्तव्ये णोऽसन् भवति, न तु णे कर्त्तव्ये ष इति, तत्र षे कर्त्तव्ये णोऽसन् यथा प्रनष्ट इत्यत्र 'यजसृजमृजराजभ्राजेति' षत्वे कर्त्तव्ये 'नशश्श' इति णत्वसूत्रमसत्त्वेन प्रथमं षः, कृते च षत्वे शकारान्तत्वाभावाण्णत्वं न भवति, णे कर्त्तव्ये च षोऽसन्न भवति यथाऽभिषुणोत्यत्र 'रषृवर्णे'ति णत्वे कर्त्तव्ये 'उपसर्गात्सुगि'ति सूत्रविहितं षत्वमसन्न भवति तेन णत्वं सिद्धमिति ॥ १४० ॥

तथा—'षणमसदिति' च सूत्रं कथं न कृतं इत्यपि प्रश्नोऽत्रोत्तरं—सूत्रपाठे 'नाम्यन्तस्थाकवर्गे'त्यादीनि पूर्व्वसूत्राणि, 'रषृवर्णान्नो णे' त्यादीनि तु परसूत्राणि, तेन णषमसदिति निर्देशकरणादिति ज्ञापितं यन्नाम्यन्तस्थाकवर्गेत्यादीनि पूर्व्वं (पर) सूत्राणि रषृवर्णान्नो णेत्यादीनि तु पर (पूर्व) सूत्राणीति, तत्फलं च पूर्व्वप्रश्नोत्तरे दर्शितमेवेति ॥ १४१ ॥

तथा—लिङ्गानुशासनादिसूत्रे पुँल्लिङ्गं कटणेति पुंल्लिगमिति पुँल्लिङ्गमिति वा युक्तमिति, प्रश्नोऽत्रोत्तरं—'तौ मुमो व्यञ्जने स्वौ' इति सूत्रेणानुस्वारानुनासिकावुभावपि स्त इति ॥ १४२ ॥

तथा—मद्यमासादिपानभक्षणे सम्यक्त्वक्षितये भवतो न वेति प्रश्नोऽत्रोत्तरं—सम्यक्त्वक्षितिर्भवतीत्येकान्तो ज्ञातो नास्तीति ॥ १४३ ॥

तथा—समवसरणस्था देवा देव्यश्च मनुष्याणां दृग्गोचरे आयान्ति न वेति, प्रश्नोऽत्रोत्तरं—देवादयो दृग्गोचरे समायान्ति ॥ १४४ ॥

तथा—मनुष्ययोनौ द्वीन्द्रियादिजीवोत्पत्तिस्तथैव तिर्यग्योनौ कश्चिद्विशेषो वेति प्रश्नोऽत्रोत्तरं—तिर्यगाश्रितः कोऽपि विशेषः शास्त्रे दृष्टो नास्तीति ॥ १४५ ॥

तथा—देवलोके या आपो वनस्पतयश्च सन्ति ताः किं पृथ्वीपरिणामरूपास्तत्परिणामरूपा वा ?, तत्परिणामरूपाश्चेत्तदा तासां कुत उत्पत्तिः? तथा शुष्कानां कचवरतया जातानां निर्म्माल्यतापन्नानां (च) का गतिरित्यागमाक्षरपूर्व्वकं प्रसाद्यं, कल्पवृक्षाः पृथ्वीपरिणामरूपा वनस्पतिपरिणामरूपा वेति प्रश्नोऽत्रोत्तरं—आपस्तरवश्चोभयरूपाः, उत्पत्तिस्तु पद्महृदादिष्विव स्वस्वस्थानेभ्य इति, तथा निर्म्माल्यतापन्नशुष्कपत्रपुष्पादीनां त्वरितमेव विस्रसातो दिव्यानुभावेन वा विशरारुताभवने न कचवरतापत्तिः, शास्त्रागमाक्षराणि तु जीवाभिगमजम्बूद्वीपप्रज्ञप्त्यादौ भोगभूमिवर्णनाधिकारे सन्ति, भोगभूमित्वं च देवलोकस्यापि, यथा तत्र कचवराद्यभावस्तथा देवलोकेऽपि तत्त्वार्थादावुक्तमस्तीति । तथा कल्पवृक्षा वनस्पतिपरिणामरूपा ज्ञेया वसुदेवहिण्डौ ऋषिदत्ताधिकारे मार्गविप्रकीर्णबीजेभ्यस्तेषामुद्भवदर्शनादिति ज्ञेयम् ॥ १४६ ॥

तथा—जीवाभिगमे विजयदेववक्तव्यताया हरितालहिङ्गुलादयः पदार्थाः सन्ति, तेषां प्रयोजने सति व्ययादुत्पत्तिः कुत इति प्रश्नोऽत्रोत्तरं—हरितालादीनामुत्पत्तिर्विस्रसात इति ॥ १४७ ॥

तथा—उपपदं विना क्त्वाप्रत्ययस्य यबादेशो भवति न वेति, प्रश्नोऽत्रोत्तरं—अव्यये पूर्व्वपदे सति धातोः परस्य क्त्वाप्रत्ययस्य यबादेशो भवति, नान्यथा, पूर्व्वोत्तरपदव्यवहारश्च ‘ गतिकन्यस्तत्पुरुषः ’ इत्यादिना समासे सत्येव भवतीति ॥ १४८ ॥

तथा—'व्यञ्जनात्पञ्चमान्तस्थायाः सरूपे वा' इत्यत्रेतरेतरद्वन्द्वे स्त्रीत्वे द्विवचनं घटते, समाहारद्वन्द्वे तु नपुंस्त्वे एकवचनमुभयथापि पञ्चमान्तस्थाया इति कथं सूपपन्नमिति प्रश्नोऽत्रोत्तरं—पञ्चमावयवयोगात्समुदायोऽप्युपचारात्पञ्चम एवमन्तस्थावयवयोगात्समुदायोऽप्यन्तस्था ततः पञ्चमश्चासौ अन्तस्था चेति कर्मधारयसमासकरणादत्र सर्वं सूपपन्नमथवा सूत्रत्वादेवेतरेतरद्वन्द्वेऽप्येकत्वमिति ॥ १४९ ॥

तथा—महामत्स्यभ्रूत्पन्नस्य तन्दुलमत्स्यस्य गर्भस्थितिरान्तर्मुहूर्त्तिक्यायुःस्थितिरप्यान्तर्मुहूर्त्तिकी तत् कथं मिलतीति प्रश्नोऽत्रोत्तरं—महामत्स्यभ्रूत्पन्नमत्स्यस्य गर्भस्थितिरायुःस्थितिश्चैकस्मिन्नेवान्तर्मुहूर्त्ते भवति, परं गर्भस्थितेरन्तर्मुहूर्त्तस्य लघुत्वान्न किमप्यनुपपन्नं, किञ्च नवसमयादारभ्य घटिकाद्वयं यावदन्तर्मुहूर्त्तं, तस्यासङ्ख्येयभेदत्वाल्लघुत्वमिति ॥ १५० ॥

तथा—युगन्धर्याद्येककणारम्भे भक्षणे चैकस्यैव जीवस्य हिंसा, किन्तु पर्याप्तैकजीवनिश्रितासङ्ख्यातपर्याप्तकानामपि ? तथा तेषामाश्रयभङ्गकृत एवोपद्रवः ? किन्तु तेषामपि हिंसेति सहेतुकं प्रसाद्यमिति प्रश्नोऽत्रोत्तरं—युगन्धर्याद्येककणारम्भभक्षणयोः पर्याप्तकहिंसावत्तन्निश्रितासङ्ख्यातपर्याप्तकानामपि हिंसा सम्भवति, न तु केवलाश्रयभङ्गकृत उपद्रवः, तदवश्यंभावस्तु केवलिगम्य इति ॥ १५१ ॥

तथा—'जत्थेगो पज्जत्तो, तत्थ असंखा अपज्जत्ता' इतिवाक्यमेकेन्द्रियादिपञ्चेन्द्रियपर्याप्तकान्तानाश्रित्य किन्त्वेकेन्द्रियपर्याप्तकानाश्रित्यैवेति प्रश्नोऽत्रोत्तरं—यत्रैकः पर्याप्तस्तत्र तन्निश्रया नियमादसङ्ख्येया अपर्याप्ता इत्येकेन्द्रियानाश्रित्य व्याप्तिरवसेया, न तु द्वीन्द्रियादीन्, प्रज्ञापनायामेकेन्द्रियसूत्र एव तदभिधानादिति ॥ १२ ॥

तथा—'यत्कोकिलः किल मधावि' त्यत्र यच्छब्दाग्रे का विभक्तिः, 'तच्चारुचूते' त्यत्र तच्छब्दाग्रे च का विभक्तिः ? अत्र यत्तच्छब्दावव्ययौ वाऽनव्ययौ वेति ? प्रश्नोऽत्रोत्तरं—यच्छब्दाग्रे क्रियाविशेषणत्वे द्वितीया विभक्तिर्वाक्यार्थमात्रवाचित्वे तु प्रथमापि सम्भवति, तच्छब्दाग्रे तु

तस्य पूर्व्वपरामर्शित्वेन प्रथमा विभक्तिर्व्याख्यानान्तरेण सप्तम्यपीति यत्तच्छब्दावव्ययावनव्ययौ च वर्त्तेते इति सर्वं सुस्थमिति ॥ १५३ ॥

तथा—प्रत्यर्धचक्रिणोऽर्द्धचक्रिणो वा गङ्गासिन्धुकृतव्यवधानात्पूर्व्वापरखण्डयोः साधने तत्र गमने क उपायः, चर्म्मरत्नाभावात्तयोरुत्तरणं कथं स्यादिति, तथा सम्प्रतिभूपत्यादीनां त्रिखण्डाधिपत्यं वास्तवमुतोपमामात्रं वेति प्रश्नोऽत्रोत्तरं—तेषां देवादिसांनिध्यात्सर्व्वं सम्भाव्यत इति ॥१५४॥

## अथ पण्डितजयविजयगणिकृतप्रश्नास्तदुत्तराणि च ।

यथा—'अंतोमुहुत्तमित्तंपी' तिगाथायां प्राप्तसम्यक्त्वानां जीवानां योऽर्द्धपुद्गलपरावर्त्तकालः प्रोक्तः, स सूक्ष्मसूक्ष्मेतरभेदभिन्नद्रव्यक्षेत्रकालभावजनिताष्टभेदानां पुद्गलपरावर्त्तानां मध्ये कस्यायमर्द्धपुद्गलपरावर्त्तः काल इति, प्रश्नोऽत्रोत्तरं—सूक्ष्मक्षेत्रपुद्गलपरावर्त्तस्सम्भाव्यते, यदुक्तं प्रवचनसारोद्धारसत्कषष्टयधिकशततमद्वारवृत्तौ पुद्गलपरावर्त्तस्वरूपाधिकारे—'इह च बादरे प्ररूपिते सति सूक्ष्मः सुखेन शिष्यैः समधिगम्यते इति बादरपुद्गलपरावर्त्तप्ररूपणा क्रियते, न पुनः कोऽपि बादरपुद्गलपरावर्त्तः क्वचिदपि सिद्धान्तप्रदेशे प्रयोजनवानुपलक्ष्यत इति'। तथा सूक्ष्माणामपि चतुर्णां पुद्गलपरावर्त्तानां मध्ये जीवाभिगमे पुद्गलपरावर्त्तः क्षेत्रतो बाहुल्येन परिगृहीतः क्षेत्रतो मार्गणाया तस्योपादानात्, तथा च सूत्रं 'जे साइसपज्जवसिए मिच्छद्दिट्ठी से जहन्नेण अंतोमुहुत्तं उक्कोसेणं अणंतं कालं, अणंता ओसप्पिणीओ कालओ खेत्तओ अवड्ढं पोग्गलपरिअट्टं देसूणमित्यादि' ततोऽन्यत्रापि यत्र विशेषनिर्देशो नास्ति, तत्र पुद्गलपरावर्त्तग्रहणे क्षेत्रपुद्गलपरावर्त्तो गृह्यत इति ॥ १५५ ॥

तथा—देवद्रव्याधिकारे कथं श्राद्धैर्देवद्रव्यवृद्धिः कर्त्तुं शक्यते, यदुक्तमागमे—'भक्खंतो जिणदव्वं, अणंतसंसारिओ भणिओ' इति जानन्नप्यात्मव्यतिरिक्ताना यच्छंस्तेषां संसारवृद्धिं प्रति कारणं भवति, न हि विषं कस्यापि विकारकृन्न स्यात्, सर्व्वेषामपायकृदेव स्यात्, ग्रन्थान्तरे

आलोचनाधिकारे मूषकादीनामपि दोषोत्पत्तिरुक्ताऽस्ति, तदत्र का वृद्धिं प्रति रीतिरिति प्रश्नोऽत्रोत्तरं—मुख्यवृत्त्या श्राद्धानां देवद्रव्यस्य विनाशन एव दोषो, यथाकालमुचितव्याजदानपूर्व्वकं ग्रहणे तु न भूयान् दोषः, समधिकव्याजदाने पुनर्दोषाभावोऽवसीयते, तेन तेषां यत्तद्वर्ज्जनं तन्निःशूकतादिदोषपरिहारार्थं ज्ञेयं। किञ्च-श्रीजिनशासने देवद्रव्यस्य विनाशे दुर्लभबोधिता तद्रक्षादिदेशनादानोपेक्षणादौ साधोरपि भवदुःखं च शास्त्रे दर्शिते स्तः, तेन तदभिज्ञानां श्राद्धानां तस्याव्यापारणमेव यौक्तिकं, मा कदाचित्प्रमादादिना स्वल्पोऽपि तदुपभोगो भवत्विति सुस्थानस्थापनप्रत्यहंसारादिकरणंपुरस्सरं महानिधानवत्तत्परिपालने च तेषामपि न कोऽपि दोषः, किन्तु तीर्थकृन्नामकर्म्मनिबन्धनादिहेतुर्लभ एवेति, इतरस्य तु तद्भोगदोषानभिज्ञस्य निःशूकताद्यसम्भवाद्वृद्ध्यर्थं ग्रहणकग्रहणपूर्व्वकं समर्प्पणे न दोष इति तथा व्यवह्रियमाणमस्तीति सम्भाव्यते। मूषकादिषु तु वृद्ध्याद्यर्थं समर्प्पणव्यवहाराभावात्तेषां तद्भक्षणे दोष एवेति ॥ १९६ ॥

तथा—'ससिधवला अरिहंता' इति गाथायामर्हदादीनां श्वेताद्यारोपः, स किंहेतुक इति, प्रश्नोऽत्रोत्तरं—अर्हन्तः पञ्चवर्णाः सिद्धास्त्ववर्णाः शास्त्रेषु व्यक्ततयैवोक्ताः सन्ति, आचार्यादयोऽपि केवलपीतादिरूपा एव न भवन्ति, तेनैतेषु पूर्व्वाचार्यैर्वर्णक्रमेण ध्यायमानेषु श्वेताद्येकैकवर्णारोपणपूर्व्वकमेषां ध्यानं सिद्धिकृद्भवतीति, ( तथाख्यातं ) ते तु सर्वास्वपि हि क्रियासु द्रव्यक्षेत्रकालभावादिसामग्रीविचित्रासु प्रवर्त्तन्त इति न काप्यनुपपत्तिरिति ॥ १९७ ॥

तथा—मनुजक्षेत्रे व्यवस्थितानां मनोमात्रग्राहका ऋजुमतय इति कल्पसूत्रावचूर्ण्यादौ, तथा प्रज्ञापनावृत्तौ—' मनःपर्यायज्ञानं' इदं चार्द्धतृतीयद्वीपद्विसमुद्रान्तर्वर्तिसंज्ञिमनोगतद्रव्यावलम्बन ' मिति व्याख्यानानुसारेण वर्तमानानामेव संज्ञिनां मनोगतपर्यायावभासो जायत इति, तथा च सति यदुक्तं प्रज्ञापनाटीकायां— मनःपर्यायज्ञानमपि पल्योपमासङ्ख्येयभागमतीतं जानातीति कथं सङ्गच्छत इति प्रश्नोऽत्रोत्तरं—वर्तिपदं मनुज-

नतु वर्त्तमानसंज्ञिमनोगतद्रव्यावबोधनियमपरं, तेनावधिज्ञानिवन्मनःपर्यायज्ञान्यपि यथोक्तानेव

क्षेत्राधिकक्षेत्रवर्त्तिसंज्ञिमनोगतद्रव्यावबोधनिषेधपरं

मनोगतभावान् जानातीति न कश्चिद्विरोध इति ॥ १५८ ॥ ' काहि णं भंते ! दाहिणिल्ला असुरकुमारादि देवा परिव-

तथा—असुरकुमारादिदशनिकायानां भवनानि कया रीत्या सन्ति, प्रज्ञापनायां तु ' काहि णं भंते ! मज्झे अट्ठहत्तरे जोअणसतसहस्से चोत्तीसं

सन्ति ? गोअमा ! जंबूदीवे दीवे इमीसे रयणप्पभाए पुढवीए असीउत्तरजोअणसतसहस्सबाहल्लाए तेन तेषां कथं पृथक्त्वं स्यादिति, प्रश्नोऽत्रोत्तरं–तेषां विशे-

भवणावाससतसहस्सा भवन्ती ' त्येतत्सूत्रानुसारेण स्थिताना नवानामालापकाः प्रवर्त्तिताः; ॥ १५९ ॥

पतः स्थाननैयत्याक्षराणि शास्त्रान्तरे न दृश्यन्ते, प्रज्ञापनायां तु सामान्यत उक्तानीति अर्हन्निर्वाणे लोकेऽन्धकारं भवति, तथा त्रयाणां नाशे समानमुत

तथा—स्थानाङ्गे चतुर्भिः कारणैर्लोके उद्योतो भवति, तथा अन्धकारमपि, अर्हं विना शेषत्रयोच्छेदे भावान्धकारमधिकं

कश्चिद्विशेषो वेति प्रश्नोऽत्रोत्तरं–लोकानुभावादेवार्हदादीनां चतुर्णामप्युच्छेदे द्रव्यान्धकारं समानं,

स्यादिति विशेषः स्थानाङ्गवृत्त्यनुसारेण ज्ञायत इति ॥ १६० ॥ समागत्य प्रतिलेखनां करोति, काजको-

तथोपधानवाहकाना मध्ये कैश्चिद्यथाविधि प्रतिलेखनापूर्वं प्रमार्जना कृता, तदनु कश्चिदन्यस्तदवस्थः कश्चित्तत्रागत्योपाधिप्रतिलेखनां

द्धरणं न करोति, तस्य दिनवृद्धिर्भवति न वेति प्रश्नोऽत्रोत्तरं—उपधानवाहिभिः काजकोद्धरणे कृतेऽपि यद्यन्यः

करोति, तदा तत्काजकोद्धरणमपि कृतं विलोक्यते, अन्यथा दिनवृद्धिः स्यादिति ॥ १६१ ॥ कालमण्डलानि च क्रियन्ते, पौरुष्याः

तथा—प्रतिकालमेकैकं स्वाध्यायं प्रस्थाप्य कालानुष्ठानं क्रियते, तदनु अवशिष्टाः स्वाध्यायाः इति, वदन्ति च

सकाले सति, नो चेच्चतुर्थप्रहरान्तर्विधीयत इति सामाचार्यां सामान्येन प्रोक्तेऽपि कैश्चिद्गीतार्थैरकृतभोजनाना साधूनामनुष्ठानं कार्यत

ते—श्रीपरमगुरवः इत्थं कारयन्ति तथाऽस्माभिः कार्यत इति, तत्र किं भोजकानामभोजकानां वा कार्यत इति **प्रश्नोऽत्रोत्तरं**—कालग्रहणद्वयशुद्धावेककालप्रतिक्रमणे सत्यवशिष्टकालमितस्वाध्याये प्रस्थापिते सत्याहारादि कर्त्तुं कल्पते, नान्यथा, तदन्ववशिष्टां क्रिया सन्ध्याया करोतीत्यात्मीयसङ्घाटकप्रवृत्तिरिति ॥ १६२ ॥

## अथ पण्डितधनविजयगणिकृतप्रश्नास्तदुत्तराणि च ।

**यथा सिद्धपञ्चाशिकायामनन्तकालच्युतसम्यक्त्वादिविशेषणविशिष्टा एवैकस्मिन् समयेऽष्टोत्तरं शतं सिध्यन्तीत्युक्तं, तथा च साति** ऋषभादयः सर्वेऽष्टोत्तरशतमनन्तकालच्युतसम्यक्त्वादिविशेषणविशिष्टा एव अन्यथापि वा ?, विशिष्टा एव चेत्तदा ऋषभदेवस्यानन्तकालच्युतसम्यक्त्वमन्यथा वा ? अनन्तकालच्युतसम्यक्त्वं चेत्तदा ऋषभदेवस्य त्रयोदश भवा एव कथं ? पूर्व्वमपि सम्यक्त्वलाभात्, अन्यथापि वेति पक्षश्चेत्तदा **सिद्धपञ्चाशिका**दिग्रन्थैरसह कथं संवादः ? आश्चर्यकृत्त्वेन चेत्तदा तदाश्चर्यं किमुत्कृष्टावगाहनया तीर्थकृत्त्वेन वा सङ्ख्यातकालपतितत्वादिना वा ? त्रिधापि वेति व्यक्त्या प्रसाद्यमिति, **प्रश्नोऽत्रोत्तरं**—एकस्मिन् समयेऽष्टोत्तरं सिध्यन्तस्सर्व्वेऽप्यनन्तकालच्युतसम्यक्त्वादिविशेषणविशिष्टा एव सिध्यन्तीत्यक्षराणि यदि **सिद्धपञ्चाशिकादिषु** भवन्ति तदा बाहुबलेः षड्लक्षपूर्व्वप्रमाणायुषोऽपवृत्तिरिव श्रीऋषभदेवस्यापि सिद्धिराश्चर्यकृत्त्वेन समर्थनीया, एवं तदधिकारे यद्यदसम्भवि तत्सर्व्वमाश्चर्य एवान्तर्भावनीयं ॥ १६३ ॥

**तथा**—श्रावकेण पूर्व्वं चतुर्विधाहारोपवासप्रत्याख्याने कृते सायं प्रतिक्रमणसमये सामायिककरणानन्तरं षडावश्यकसत्यापनस्थानाशून्यार्थं मुखवस्त्रिकाप्रतिलेखनापूर्व्वं चतुर्विधाहारोपवासप्रत्याख्यानं कृतं विलोक्यते ? किंवा पूर्व्वकृतमेव प्रमाणमिति **प्रश्नोऽत्रोत्तरं**—यदि पूर्व्वं

चतुर्विधाहारोपवासप्रत्याख्यानं कृत तदा तत्प्रमाणमेवास्ति, तेन सायं प्रतिक्रमणार्थं सामायिककरणावसरे मयाऽमुकं प्रत्याख्यानं कृतमस्तीति स्मरणेन प्रत्याख्यानावश्यकसत्यापनं विधेय नतु मुखवस्त्रिकाप्रतिलेखनापूर्वं पुनश्चतुर्विधाहारोपवासप्रत्याख्यानं कृतं विलोक्यत इति ॥ १६४ ॥

तथा—तीर्थकृतां त्रयोदशादिभवाः प्रथमसम्यक्त्वलाभापेक्षया वा प्रसिद्धमहत्त्वापेक्षया वा किंवा प्रकारान्तरेणेति ? प्रश्नोऽत्रोत्तरं—आवश्यकाद्यभिप्रायेण श्रीऋषभादितीर्थकृता त्रयोदशादिभवाः प्रथमसम्यक्त्वलाभापेक्षया गण्यन्ते, न त्वन्यापेक्षयेति ॥ १६५ ॥

तथा—पण्डितपदनन्दिभवनाभावे पण्डितपदस्थस्य पुरो न्यूनाधिकपर्यायाणां सामान्ययतीना सञ्जातनन्दीना लघुपण्डिताना च कियन्ति कियन्ति क्रियाकार्याणि कृतानि शुध्यन्तीति ?, प्रश्नोऽत्रोत्तरं—पण्डितपदनन्दिभवनाभावेऽपि वृद्धपण्डितस्य पुरः प्रतिदिनं क्रियमाणानि सर्व्वाण्यपि धर्म्मकार्याणि सर्व्वेषा कृतानि शुद्ध्यन्ति, शैक्षोपस्थापनाचार्यप्रतिष्ठाप्रतिमाप्रतिष्ठादिकानि तु कृत्यानि मन्त्रसापेक्षत्वान्न शुद्ध्यन्ति (इति) पारम्पर्यं, साम्प्रतं तु केचन वृद्धगणयो लघुपाण्डितस्य पुरः क्षामणानुष्ठानादिकं न कुर्व्वन्ति, तत्प्रवृत्तिस्तु प्रवाहप्रवृत्तेति निवारयितुमशक्या, परं शास्त्राक्षरानुसारेण लघोरपि पण्डितस्य पुरो वृद्धानामपि गणीना तत्करणं नानौचितीमञ्चतीति ॥ १६६ ॥

तथा—पक्षोपवासरोहिणीपञ्चम्यादितपस्सु बहुवर्षाचरितेषु कदाचिद्विस्मृत्या महाकारणादिना वा पक्षोपवासादिदिने उपवासाभवने पक्षोपवासादि तपो मूलतो याति ? किंवा यथोक्तवर्षमासभवनानन्तरं तत्तपःकरणादिना निष्ठां नीयत इति ? प्रश्नोऽत्रोत्तरं—विस्मृत्यादिना तपोदिनाज्ञाने तत्रोपवासाभवने द्वितीयदिने दण्डनिमित्तं तत्तपः कार्यं, समाप्तौ च वर्द्धमानं विधेयमित्यक्षराणि श्राद्धविधौ सन्ति, महाकारणे तु तपोऽकरणं महत्तराद्याकारेऽन्तर्भवतीति ॥ १६७ ॥

तथा—सर्व्वेषु युगलिक्षेत्रेषु युगलिनां गर्भजगर्भव्युत्क्रान्तादिभेदभिन्नानां जघन्यमध्यमोत्कृष्टमेदभिन्नमायुस्त्रयं किंवोत्कृष्टमेवेति प्रश्नोऽत्रोत्तरं—युगलिनामुत्कृष्टमायुर्यथास्थानं त्रिपल्योपमादि प्रतीतं, जघन्यं तु क्षुल्लकभवरूपं ज्ञेयं, यतस्त्रिपल्योपमप्रमितमप्यायुरपवर्त्त्य क्षुल्लकभवरूपं कश्चिज्जन्तुः करोतीत्यर्थकाक्षराण्याचाराङ्गवृत्त्यादौ सन्ति, परं तदपवर्त्तनमपर्याप्तावस्थायामेव भवति, तदूर्ध्वं तु न भवति, तेषां निरुपक्रमायुष्कत्वात्, मध्यमं तु युगलिनीगर्भेऽपि नवलक्षमिता गर्भजा उत्पद्यन्ते म्रियन्ते च द्वयमेव, शेषास्तु स्वमायुरपवर्त्य गर्भस्था एव म्रियन्ते, तदा क्षुल्लकभवादाधिकसमयादिभवने सम्भवतीति ॥ १६८ ॥

तथा—मदनफलं विद्धमन्तर्मुहूर्त्तादनु प्रासुकं स्यात्किंवा सचित्तमेवेति ? प्रश्नोऽत्रोत्तरं—विद्धं मदनफलमन्तर्मुहूर्त्तादनु वृद्धैरचित्ततया व्यवह्रियमाणमस्तीति ॥ १६९ ॥

तथा—स्त्रीसचित्तयोः सङ्घट्टो निरन्तरः परम्परश्च परिहर्त्तव्यः, तत्र परम्परः किं द्वाभ्यां त्रिभिर्बहुभिर्वेति सङ्ख्या प्रसाद्येति, प्रश्नोऽत्रोत्तरं—तयोः परम्परसङ्घट्ट एकेन द्वाभ्यां चान्तरितः परिहरणीयः, त्रिभिरन्तरितस्तु न लगतीति ॥ १७० ॥

तथा—प्रवचनसारोद्धारादिषु जघन्यत एकसमये दश तीर्थकराः समुत्पद्यन्त इत्युक्तं, सिद्धपञ्चाशिकादिषु चैकसमये चत्वारस्तीर्थकराः सिध्यन्तीत्युक्तं, तथा चैकसमयजन्मना दशतीर्थकृतामेकसमय एव सिद्धिसम्भवे एकसमये चत्वारस्तीर्थकराः सिध्यन्तीति कथं सङ्गच्छत इति ? प्रश्नोऽत्रोत्तरं—दश तीर्थकरा एकसमये समुत्पद्यन्त इत्यत्र समयशब्देन परमनिकृष्टकालो वा प्रस्तावो वा व्यक्ततया न ज्ञायते, चत्वारस्तीर्थकरा एकसमये सिध्यन्तीत्यत्र तु परमनिकृष्टकाल एव निश्चीयते, तेन न काऽपि विप्रतिपत्तिरिति ॥ १७१ ॥

तथा—श्रीभगवत्युक्ता एकपुत्रस्य नवशतपितरः कथ सम्भवन्तीति प्रश्नोऽत्रोत्तरं—द्वादशमुहूर्त्तान् यावद्वीर्यमविनष्टं स्यात्तावत्कालावधि नवशतमितवृषभादिभिर्भुक्ते गवादौ यो गर्भे उत्पद्यते स तावता पुत्रो भवतीति ॥ १७२ ॥

तथा—षड्विकृतिभोक्तुः श्रद्धालोर्विकृतिप्रत्याख्यानं स्यान्नवेति, प्रश्नोऽत्रोत्तरं—षड्विकृतिभोगेऽपि विकृतिप्रत्याख्यानं भवति यतः श्राद्धविधावभक्ष्यविकृतिसम्बन्ध्यपि तदुक्तमस्तीति ॥ १७३ ॥

तथा—सामायिकमध्ये सामायिकग्रहणे यावन्त आदेशाः पूर्वसामायिके मार्ग्यन्ते, तावन्त एवाग्रेतने ? किं वा न्यूनाः ?, न्यूनत्वे च सामायिकवद्दिनपौषधे गृहीते तन्मध्ये रात्रिपौषधग्रहणेऽपि पूर्णादेशमार्गणं ? किंवा न्यूनादेशमार्गणमिति, प्रश्नोऽत्रोत्तरं—सामायिकमध्ये सामायिकग्रहणे सामायिकदण्डकोच्चारणानन्तरं बइसणइ ठाउं इत्यादेशो मार्ग्यते दिवसपौषधमध्ये रात्रिपौषधग्रहणे च बहुवेल करस्युं इतिपर्यन्ता आदेशा मार्ग्यन्ते, प्रतिलेखनादेशास्तु सान्ध्यप्रतिलेखनापाठनावसरे मार्गितत्वात्पुनर्न मार्ग्यन्त इति ॥ १७४ ॥

तथा—यतिना सचित्तपानीयपरिहारिणा श्रावकेण वा प्रभाते नमस्कारसहितादिकालमात्रप्रत्याख्याने कृते सन्ध्याप्रतिलेखनायां च त्रिविधाहारप्रत्याख्याने कृतेऽकृते च सायंप्रतिक्रमणसमये तयोः पानाहारादिप्रत्याख्यानं कार्यते ? किं वा चतुर्विधाहारेत्यादिप्रत्याख्यानमिति, प्रश्नोऽत्रोत्तरं—येन सन्ध्याप्रतिलेखनायां त्रिविधाहारप्रत्याख्यानं कृतं स्यात्तस्य पानाहारप्रत्याख्यानं कार्यते, येन तु तत्कृतं न स्यात् तस्य चतुर्विधाहारप्रत्याख्यानं कार्यत इति ॥ १७५ ॥

तथा—मध्वादेः सचित्तताऽचित्तता वा, ? तत्सङ्घट्टे पर्युषितपूपिकादिसङ्घट्टे च साधुभिराहारादि गृह्यते नवा इति, प्रश्नोऽत्रोत्तरं—प्रासुक-

पाथसि पूतरकादिसद्भाव इव मध्वादिमध्ये रसजजीवसम्भवेऽपि तस्य सचित्तता नोच्यते, तत्सद्भट्टे तथा पर्युषितपूपिकादिसद्भट्टे च यतीनामाहारादि गृहीतं न शुद्ध्यति, तज्जीवानां बाधासम्भवात्प्रसङ्गपरिहारार्थत्वाच्चेति ॥ १७६ ॥

तथा—अन्तर्वाच्यादिष्वेकयोजनप्रमाणं सुघोषाघण्टामानमुक्तं, पृथक् पृथक् पत्रेषु च 'बारसजोअणविहुलेत्यादि' सुघोषामानं दृश्यते, तेन महाग्रन्थेषु किं मानमुक्तमस्तीति प्रश्नोऽत्रोत्तरं—जम्बूद्वीपप्रज्ञप्त्यादिग्रन्थेषु एकयोजनं सुघोषाघण्टामानमस्तीति ॥ १७७ ॥

तथा—उपधानमध्ये मुखपोतिकाविस्मरणे सति शतहस्तगमने भुक्तच्छण्डने रजन्या देहचिन्तोत्थानादिषु च समानैव दिनवृद्धिर्न्यूनाधिका वा? तस्या च दिनवृद्धौ सत्यामुपधानमध्ये एव दिनानि कार्यन्ते ? किंवा कारणे उपधानाद्बहिरिति, प्रश्नोऽत्रोत्तरं—उपधानविधिषु शतहस्ताद्बहिर्मुखपोतिकाविस्मरणे भुक्तच्छण्डनादिषु च सामान्यतो दिनवृद्धिरुक्ताऽस्ति, तथैव च कार्यते, तथा तानि वृद्धिदिनानि प्रायेणोपधानमध्य एव कार्यन्ते, महाकारणे तु नैकान्त इति ॥ १७८ ॥

तथा—उपधानालोचनापौषधा उपवासादितपस्सहिता विकृत्येकाशनसहिता वा दीयन्ते ? तेऽपि च केवलदिवसपौषधा अहोरात्रपौषधा वेति ? प्रश्नोऽत्रोत्तरं—उपधानालोचनापौषधा उपवाससहिता अहोरात्ररूपा एव दीयन्त इति ॥ १७९ ॥

तथा—जम्बूद्वीपमहाविदेहे चतुर्षु विजयेषु विहरमाणजिनचतुष्टयसत्त्वे तत्रैवान्यविजयेषु साम्प्रतीनकालेऽन्यजिनाना जन्मकुमारावस्थादि सम्भाव्यते नवेति ?, विहरमानपदवाच्या वर्त्तमाना एव जिनाः समवसरणस्था एव वेति ?, महाविदेहक्षेत्रं च सम्पूर्णमपि कदाचित् केवलिपर्यायोपेताजिनविरहितं सामान्यतः तीर्थकरसत्तया विरहितं च भवति नवेति ? प्रश्नोऽत्रोत्तरं—साम्प्रतीनकाले विहरमाणजिनानाधिष्ठितविजयेषु परेषां तीर्थकृतां

जन्मकुमारावस्थाद्यसम्भवो ज्ञातो नास्ति, तथा केवलिपर्याये वर्त्तमाना जिना विहरमाणत्वेनाच्या भवन्ति, तथा सम्पूर्णमहाविदेहक्षेत्रं कदाचनापि केवलिपर्यायोपेतजिनविरहितं सामान्यतस्तीर्थकरसत्तया विरहितं च न भवतीति ज्ञेयम् ॥ १८० ॥

तथा—स्पर्शनेन्द्रियादीनि त्रीणि नव योजनेभ्य आगत स्वविषयं गृह्णन्ति, तत्र चक्षुःश्रोत्रेन्द्रिययोरिव स्पर्शनेन्द्रियादीना विषयग्रहे के दृष्टान्ता इति ? प्रश्नोऽत्रोत्तरं–नवयोजनेभ्यः परतः पायोवृष्टौ तत आगताः शरीरं स्पृशन्तो जलपुद्गला रसनघ्राणयोर्गतस्ततस्तत्प्रदेशागतमृत्तिकापुद्गलाश्च दृष्टान्ताः पुष्पमालाद्यनुसारेण बोध्या इति ॥ १८१ ॥

तथा—श्रावकैः पौषधोपधानादिषु सन्ध्याप्रतिलेखनाया क्रियमाणायां 'पडिलेहणा पडिलेहाउ' इत्यादेशमार्गणानन्तरं जाते काजकोद्धारे उपधिमुखपोतिकाप्रतिलेखनानन्तरं उपधिप्रतिलेखने कृते तत्काजकोद्धारः कृतो विलोक्यते नवेति ? प्रश्नोऽत्रोत्तरं–पूर्वं काजकोद्धारे कृतेऽप्युपधि-प्रतिलेखनानन्तरं तत्काजकोद्धारः कृतो विलोक्यत इति ॥ १८२ ॥

तथा—षष्ठोपधानप्रवेशे आद्यदिन एव मालापरिधापने प्रथमा वाचना दत्त्वा माला परिधाप्यत उत पूर्णे तत्तपसि मालापरिधानानन्तरं आद्यवाचना दीयत इति ? प्रश्नोऽत्रोत्तरं–षष्ठोपधानप्रवेशाद्यदिने प्रवेदनकं प्रवेद्य प्रथमां वाचनां दत्त्वा समुद्देशादिक्रिया कारयित्वा माला परिधाप्यत इति ॥ १८३ ॥

तथा—जिनालये प्रत्याख्यानं पारयितुं शुद्ध्यति नवेति प्रश्नोऽत्रोत्तरं–शुद्ध्यतीति सम्प्रदाय इति ॥ १८४ ॥

तथोपधानेषूह्यमानेषु विंशतिस्थानकादि तपः कर्त्तुं न शुद्ध्यति नवेति प्रश्नोऽत्रोत्तरं– तत्तपः प्रायः कर्त्तुं न शुद्ध्यतीति ॥ १८५ ॥

तथा—साध्वीभिः श्राविकाभिश्च दैवसिकप्रतिक्रमणे सुअदेवया भगाई इति कथ्यते, तदनुरोधेन साध्वमाने श्राविकाभिरत्र पाक्षिकसूत्रस्थानीयप्रतिक्रमणसूत्रप्रान्ते कथ्यते, पर सा कथयितुं युज्यते नवेति प्रश्नोऽत्रोत्तरं—साध्वीनां श्राद्धीनां चैवं स्तुतिकथने सामाचार्येव प्रमाणमिति ॥ १८६ ॥

## अथ वृद्धपण्डितशुभविजयगणिकृतप्रश्नास्तदुत्तराणि च ।

यथा—तीर्थकृद्भिस्सह ये दीक्षा गृह्णन्ति ते किं तीर्थकृद्वत्पाठोच्चारादिकं कुर्वन्त्युत भिन्नमिति प्रश्नोऽत्रोत्तरं—तीर्थङ्करैः सार्द्धं दीक्षाग्रहणं कुर्वद्भिः स्वयं दक्षत्वात्तत्तत्क्षेत्रकालाद्यनुसारेण तपस्याग्रहणं क्रियते, न तु तीर्थकरवत, प्रथमतीर्थकृता सार्द्धं तु तीर्थकरवत् पाठोच्चारं कुर्वन्तीति ज्ञायते ॥ १८७ ॥

तथा—सङ्ग्रहण्यन्तर्वाच्यादिषु लोकान्तिकदेवाना नव निकाया उत्तमचरित्रे दश निकाया कथिताः तत्र किं प्रमाणमिति प्रश्नोऽत्रोत्तरं—बहुग्रन्थेषु तेषा नव निकाया उक्ताः, उत्तमचरित्रे यदि दश तदा मतान्तरमिति ज्ञेयम् ॥ १८८ ॥

तथा—चक्षुर्विकलस्य केवलज्ञानमुत्पद्यते नवेति प्रश्नोऽत्रोत्तरं—उत्पद्यत इति ॥ १८९ ॥

तथा—फुक्कानीरं सीकरीनीर पाडलनीरं च द्विविधाहारे कल्प्यतयोक्तं, तत् किंस्वरूपमिति प्रश्नोऽत्रोत्तरं—फूकानीरं सीकरीनीरं च देशविशेषे प्रसिद्धं भविष्यति, पाडलनीरं तु पाडलिवृक्षपुष्पामिति ॥ १९० ॥

तथा—गोआरफली चणकादि द्विदलस्य भञ्जिका च द्विदलं स्यान्नवेति प्रश्नोऽत्रोत्तरं—द्विदलं भवतीति ॥ १९१ ॥

तथा—नालिवाणिः सूर्यातपमन्तरेण कतिभिर्दिनैः शुष्कवाणिर्भवतीति प्रश्नोऽत्रोत्तरं-सूर्यातपतास्त्रिभिर्दिनैः शुष्कवाणिः स्यात्तमन्तरेण तु यदा स्वयं शुष्यति तदा शुष्कवाणिर्नत्वत्र दिननैयत्यमिति ॥ १९२ ॥

तथा—पौषधग्राहिण्य आस्तिक्यः गुरोः पुरो गुंहलिका कुर्व्वन्ति नवा द्रव्यस्तवत्वादिति, प्रश्नोऽत्रोत्तरं—द्रव्यस्तवत्वान्न शुद्ध्यतीति ॥१९३॥

तथा—देवपूजास्नात्रकरणानन्तरं श्राद्धय आरत्युत्तारणमङ्गलदीपादि कृत्यं कुर्व्वन्ति नवेति ? प्रश्नोऽत्रोत्तरं—तयोः करणेऽधुना प्रवृत्तिर्न दृश्यते, निषेधस्तु शास्त्रे दृष्टो नास्तीति क्वचिद्देशविशेषे तत्कुर्व्वन्त्यपीति ॥ १९४ ॥

तथा—व्याख्यानवेलायां कृतसामायिका श्राद्धी आदेशमार्गणपूर्व्वकं प्रतिलेखना करोत्यन्यथा वेति ? प्रश्नोऽत्रोत्तरं—सामायिकमध्ये प्रतिलेखनादेशमार्गण यौक्तिकमिति ॥ १९५ ॥

तथा—अनेकशकलीकृतकरमर्द्दितप्रहरमात्रधृतताम्बूलीदलं सचित्तमचित्त वेति ? प्रश्नोऽत्रोत्तरं—एतादृशपत्रस्याचित्तीभवने व्यवहारो नास्तीति ॥ १९६ ॥

## अथ पण्डितदेवविजयगणिकृतप्रश्नस्तदुत्तरं च,

यथा—कश्चित् श्राद्धः स्वद्रव्येण प्रतिमा कश्चित्पुस्तकं च, तदा प्रतिमाकर्त्तुर्देवद्रव्यं पुस्तकलेखकस्य ज्ञानद्रव्यं च लगति नवेति प्रश्नोऽत्रोत्तरं—उभयोरपि यथाक्रमं ते उभे न लगत इति सम्भाव्यते ॥ १९७ ॥

## अथ पण्डितकान्हजीगणिकृतप्रश्नास्तदुत्तराणि च,

यथा—तीर्थकृद्दानमभव्याः प्राप्नुवन्ति नवेति ? प्रश्नोऽत्रोत्तरं—ते नाप्नुवन्तीति वृद्धवादः, अक्षराणि तु ग्रन्थे दृष्टानि न स्मरन्तीति ॥१९८॥

तथा—श्री शत्रुञ्जयतीर्थमभव्या न स्पृशन्तीत्यक्षराणि क्व सन्तीति ? प्रश्नोऽत्रोत्तरं–श्रीशत्रुञ्जयमाहात्म्ये सन्ति, यथा, " अभव्याः पापिनो जीवा, नामुं पश्यन्ति पर्व्वतम् । लभ्यते चापि राज्यादि, नेदं तीर्थं हि लभ्यते ॥ १ ॥ " इति ॥ १९९ ॥

तथा—बलिचञ्चा राजधानी ईशानेन्द्रक्रुधा छाराङ्गारमुर्म्मुरभूताऽभूत्तत्सत्यमुत साक्षाच्छाराङ्गारभूता तत्सत्यामिति ? प्रश्नोऽत्रोत्तरं–भूतशब्दस्योपमावाचकत्वेन दिव्यानुभावतो बलिचञ्चाराजधान्यङ्गारादिसदृशी जातेति सम्भाव्यते ॥ २०० ॥

## अथ पण्डितकनककुशलगणिकृतप्रश्नास्तदुत्तराणि च,

यथा—श्रीभद्रबाहुस्वामिना नवमपूर्व्वादुद्धृतः श्रीकल्पः श्रीपर्युषणापञ्चदिनीं यावद्वाच्यमानोऽस्ति, श्रीसुधर्मस्वामिप्रभृत्याचार्याणा तु पर्युषणासमये किं शास्त्रं वाच्यमानमभूदिति ? प्रश्नोऽत्रोत्तरं–सुधर्मस्वामिप्रमुखा नवमपूर्वगतमेवैतदध्ययनं यथावस्थितं व्याख्यातवन्त इति सम्भाव्यते ॥ २०१ ॥

तथा—गोमहिष्यजाप्रभृतीना सर्प्पिष एवं क्षारमिष्टादिपयसा गोमहिष्यादितक्राणा चैकद्रव्यत्वमुत भिन्नद्रव्यत्वं वा ?, श्राद्धविधौ त्वित्थं प्रोक्तं–' यत् पृथक्पृथक्नामास्वादवत्त्वेन द्रव्यत्वं ' परं तेषु तक्रादिषु पृथक् पृथक् आस्वादत्वं न तु नामत्वमतस्तत्र कया रीत्या द्रव्यसङ्ख्या गण्यत इति ? प्रश्नोऽत्रोत्तरं–गोमहिष्यजाप्रभृतीनां सर्प्पिपः क्षारमिष्टादिपानीयाना च गोमहिष्यादितक्राणां चैकद्रव्यत्वं गण्यते, यत उभयभिन्नत्वे सति भिन्नद्रव्यत्वं स्यादिति ॥ २०२ ॥

तथा—लपनश्रियां विकृतिद्वयं घृतगुडरूपं वा किमुत कटाहविकृतिरूपता गण्यत इति ? प्रश्नोऽत्रोत्तरं–लपनाश्रियमाश्रित्य योगविध्यनुसारेण लपनश्रीर्द्विप्रकारा–एका विकृतिरूपा परा निर्विकृतिरूपा च, तत्र विकृतिरूपाया तु घृतगुडरूपविकृतियुग्मं गण्यते ॥ २०३ ॥

तथोद्वाहादिजेमनवारगृहे यथा यतीनां विहर्त्तुं न कल्पते, तथैव पौषधिकसत्कजेमनवारगृहेऽन्यथा वेति, प्रश्नोऽत्रोत्तरं—विवाहजेमनवारवत्पौषधिकसत्कजेमनवारगृहेऽपि मुनीनां विहर्त्तुं न कल्पत इति ॥ २०४ ॥

तथा—रात्रिराद्धं पूपिकादि केषाञ्चिद्रात्रिभोजनविरतिमतां गृहिणामत्तुं न कल्पते, तथा यतिजनानां तदत्तुं कल्पते नवेति, प्रश्नोऽत्रोत्तरं—तेषां रात्रिराद्धान्नाद्यग्रहणं तु बहुजीवविराधनासम्भवाद्रात्रिप्रथमप्रहरद्वयराद्धपूपालिकाद्विदलादिषु पर्युषितत्वशङ्कासम्भवाच्च, न तु रात्रिराद्धान्नग्रहणे रात्रिभोजनविरतिभङ्ग इति, यतिभिस्तु पर्युषितत्वसम्भावनाया तन्न ग्राह्यं, अन्यथा तु यथावसरं ग्रहणीयं, तेषा परार्थकृतान्नग्राहित्वेन विराधनाया अभावादिति ॥ २०५ ॥

## अथ पण्डितदर्शनसागरगणिकृतप्रश्नौ तदुत्तरे च

यथा—चतुर्दशीयप्रतिक्रमणप्रान्ते 'सज्झाय संदिसाउं भगवन्! सज्झाय करुं' इत्यादेशमार्गणं, क्रियते तु नमस्कारः उपसर्गहरस्तोत्रं संसारदावनलदाहनीरं स्तुतिश्चेति तत्कथमिति, प्रश्नोऽत्रोत्तरं—पाक्षिकप्रतिक्रमणप्रान्तस्वाध्याये स्तुतिस्तोत्रादिपठनमावश्यकचूर्ण्यभिप्रायेण, परम्परया विधीयत इति ॥ २०६ ॥

तथा—राहुविमानेनातिनीचत्वात् सूर्यविमानं कथमाव्रियतेऽत्युच्चत्वाच्च तेन चन्द्रविमानमिति प्रश्नोऽत्रोत्तरं—तत्त्वार्थभाष्यवृत्त्यनुसारेण चन्द्रविमानाद्राहुविमानमुपरिष्टाद्वर्त्तते, तच्चानियतचारत्वात्कदाचित्सूर्यविमानस्याधस्ताद्दशयोजनानि यावच्चाधः चरतीति चन्द्रसूर्ययोरावरणे न काप्याशङ्केति ॥ २०७ ॥

## अथ पण्डितविवेकसागरगणिकृतप्रश्नौ तदुत्तरे च,

तथा—नवग्रैवेयकपञ्चानुत्तरविमानेषु जिनसक्थीनि सन्ति नवा ?, यदि सन्ति तदा किं शाश्वतान्यशाश्वतानि वेति ? प्रश्नोऽत्रोत्तरं ग्रैवेयकादिषु सुधर्मादिसभानामभावाज्जिनसक्थीनि न सन्तीति ॥ २०९ ॥

तथा—स्त्रियः सर्वार्थसिद्धविमाने यान्ति नवेति ? प्रश्नोऽत्रोत्तरं—श्रीविजयचन्द्रकेवलिचरित्रे देवपूजाधिकारे स्त्रियाः सर्वार्थसिद्धगमनाक्षराणि सन्ति, तथा पृथ्वीचन्द्रचरित्रे पृथ्वीचन्द्रपूर्वभवस्त्रियः सर्वार्थसिद्धे गत्वा मनुष्यत्वं च प्राप्य सिद्धा इत्युक्तमस्तीति, तथा कनकमाला सर्वार्थसिद्धे गतेत्यष्टप्रकारीपूजाग्रन्थे प्रदीपपूजाधिकारे, तथाऽनुत्तरविमानगमनाक्षराणि तु श्रीवासुपूज्यचरितादौ स्फुटान्येव वर्त्तन्ते, तदायुर्बध्नन्तीति प्रज्ञापनासूत्रत्रयोविंशतितमकर्मप्रकृत्याख्यानपदवृत्तावप्युक्तमस्तीति ॥ २०८ ॥

## अथ श्रीहीरविजयसूरिशिष्यपण्डितरामविजयगणिकृतप्रश्नास्तदुत्तराणि च।

यथा—“ सिज्झंति जत्तिआ किर, इह संववहारजीवरासिमज्झाओ। जंति अणाइवणस्सइरासीओ तत्तिआ तंमित्ति ॥ १ ॥” वचनानुसारेण यावन्तः सिध्यन्ति तावन्त एव जीवा अनादिनिगोदाद्व्यवहारराशौ यान्त्येवं सत्यनादिसंसारमाश्रित्य विचारे यावन्तः सिद्धाः तावन्त एव सदैव व्यवहारिणोऽपि प्राप्यन्ते नाधिकाः, परं “ जइआ होही पुच्छा, जिणाण मग्गंमि उत्तरं तइआ। इक्कस्स निगोअस्स य, अणंतभागो अ सिद्धिगओ ॥ १ ॥” एतदनुसारेणैकस्य सूक्ष्मबादरान्यतरनिगोदस्यानन्ततमो भागः सिद्धिगतस्तथैव व्यवहारिणोऽप्येकस्य निगोदस्यानन्ततम एव भागे युज्यन्ते दृश्यन्ते च “ जीवाः सर्वे व्यवहार्यव्यवहारितया द्विधा। सूक्ष्मानिगोदा एवान्त्यास्तेऽन्येऽपि व्यवहारिणः ॥ १ ॥” इत्येतद्व्यवहारि-

लक्षणानुसारेण बादरनिगोदादौ सिद्धेभ्योऽनन्तानन्तगुणास्तस्मान्न ज्ञायन्ते सिद्धेभ्यो व्यवहारिजीवा अधिका वा तुल्या वेति सम्यक् प्रसाद्यमिति ?

प्रश्नोऽत्रोत्तरं—सिद्धा निगोदस्यानन्ततमे भागे उक्ताः, निगोदाश्च द्विधा—सूक्ष्मा बादराश्च, यावन्तः सिध्यन्ति तावन्तः सूक्ष्मनिगोदेभ्यो व्यवहारराशौ समायान्ति, तथा च कथं सिद्धजीवाना व्यवहारराशिजीवानां च तुल्यता, सिज्झति जत्तिये ' त्यादिगाथार्थोऽपि व्यवहारराशेस्तत्तद्ग्रन्थानुसारेणानादितया प्रतिभासात्तदनुरोधेनैव भावनीय इति ॥ २१० ॥

तथैकजीव उत्कर्षतस्संसारे कतिश इन्द्रत्वचक्रित्वादि प्राप्नोति, तत्प्राप्तिप्रतिपादकशास्त्रं च किमिति प्रश्नोऽत्रोत्तरं—तद्व्याप्तिसङ्ख्यानियमः शास्त्रे न दृश्यते, द्विशस्तत्प्राप्त्यक्षराणि तु साक्षादेव श्रीभगवतीप्रमुखग्रन्थेषु दृश्यन्ते, परं प्रायेण बहुशस्तत्प्राप्तिर्न स्यादिति सम्भाव्यते ॥ २११ ॥

तथा—ब्रह्मलोकादुपरि किं सम्यग्दृशो देवा अधिका उत मिथ्यादृशोऽधिका इति प्रश्नोऽत्रोत्तरं—पञ्चमदेवलोकात् परतो युक्त्या विचार्यमाणे मिथ्यादृष्टिभ्यस्सम्यग्दृष्टयो देवा अधिकास्सम्भाव्यन्त इति ॥ २१२ ॥

तथा—श्राद्धविधिवृत्तौ प्रतिमायाः सृष्ट्या नवाङ्गतिलककरणमुक्तं, तत्र प्रथमं किं वामपादे तत्कर्त्तव्यमथवा दक्षिणपादे इति प्रश्नोऽत्रोत्तरं—जिनप्रतिमायाः पूजाकरणावसरे नवाङ्गेषु तिलकानि दक्षिणचरणादारभ्याङ्गसृष्ट्या विधेयानीति ॥ २१३ ॥

इति सकलसूरिपुरन्दरपरमगुरुगच्छाधिराजभट्टारकश्रीविजयसेनसूरिप्रसादीकृतप्रश्नोत्तरसङ्ग्रहे भट्टारक श्रीश्रीहीरविजयसूरिशिष्यपण्डितशुभविजयगणिविरचिते द्वितीयोल्लासः ॥

# अथ तृतीय उल्लासः

श्रीपार्श्वं प्रणिपत्य, श्रीशङ्खपुरेश्वरं जिनं भक्त्या । आरभ्यते तृतीयोल्लासः शुभविजयविदुषेन ॥ १ ॥

## अथैतद्ग्रन्थकृत्पण्डितशुभविजयगणिकृतप्रश्नास्तदुत्तराणि च-

यथा—प्रातर्व्याख्यानप्रारम्भे तीर्थङ्करा 'नमो तित्थस्स' इति कथयन्ति, तत्र तीर्थशब्देन किमुच्यत इति ? प्रश्नोऽत्रोत्तरं—आवश्यकहारिभद्रीवृत्त्याद्यनुसारेण तत्र तीर्थशब्देन श्रुतं द्वादशाङ्गरूपं प्रोच्यत इति ॥ १ ॥

तथा—पार्श्वस्थादिदीक्षितसाधोर्गणो भवति नवेति ? प्रश्नोऽत्रोत्तरं—पार्श्वस्थादिदीक्षितमुनेर्गणो भवति, यदुक्तं महानिशीथतृतीयाध्ययनप्रान्तप्रस्तावे 'सत्तट्ठगुरुपरंपरकुसीले एगबितिगुरुपरंपरकुसीले' इत्यस्यार्थः—अत्र विकल्पद्वयभणनादेवमवसीयते यदेकद्वित्रिगुरुपरम्परां यावत्कुशीलत्वेऽपि तत्र साधुसामाचारी सर्वथोच्छिन्ना न भवति, तेन यदि कश्चित्क्रियोद्धारं करोति तदाऽन्यसाम्भोगिकादिभ्यश्चारित्रोपसम्पदं गृहीत्वैव क्रियोद्धारं करोति नान्यथेति । किञ्च—कश्चिन्निह्नवपार्श्वे प्रव्रजितस्तान् विहाय साधुसमीपे आगतस्तस्य तदेव प्रायश्चित्तं यदसौ सम्यग्मार्गं प्रतिपद्यते स एव च तस्य व्रतपर्यायो, न भूय उपस्थापना कर्त्तव्येति बृहत्कल्पतृतीयखण्डे १२६ पत्रेऽपीति ॥ २ ॥

तथा—मुत्कलश्रावका नमस्कारनयेण नमस्कारादिप्रत्याख्यानं पारयन्ति तदक्षराणि क सन्तीति ? प्रश्नोऽत्रोत्तरं—मुत्कलश्राद्धा नमस्कारनयेण नमस्कारादिप्रत्याख्यानं पारयन्तीत्यविच्छिन्नपरम्पराऽस्ति, परमेतदक्षराणि कुत्रापि दृष्टानि न स्मरन्तीति ॥ ३ ॥

तथा स्वपाक्षिणः परपक्षिणश्च के भवन्तीति ? प्रश्नोऽत्रोत्तरं—अथ कः पुनः स्वपक्षः ? को वा परपक्ष इत्याह—निह्नगाइ अंति निह्नवपार्श्व-

इति बृहत्कल्पप्रथमखण्डे १२० पत्रे, एतदक्षरानुसारेण निह्नवपार्श्व-
स्थादयस्साधुलिङ्गधारिणः स्वपक्षः, आदिग्रहणाच्चरकपरिव्राजकादयः परपक्ष
स्थादयः स्वपक्षिणश्चरकपरिव्राजकादयश्च परपक्षिण इति ॥ ४ ॥

तथौषधभेषजयोः कश्चिद्भेदो नवेति ? प्रश्नोऽत्रोत्तरं—एकजातीयशुण्ठयाद्यौषधमनेकजातीयगुटिकाचूर्णादि भेषजमिति, पञ्चसूत्रबृह-
द्वृत्त्यनुसारेण भेदो ज्ञायत इति ॥ ५ ॥

तथा—कश्चिद्वक्त्यहं भव्योऽभव्यो वेति कथं ज्ञायत इति ? प्रश्नोऽत्रोत्तरं—यो जानाति स्वचित्तेऽहं भव्योऽभव्यो वा स नियमाद्भव्य एव,
यतोऽभव्यस्य हि भव्याभव्यशङ्काया अभावादित्याचाराङ्गावन्त्यध्ययनस्य पञ्चमोद्देशके वृत्तौ ॥ ६ ॥

तथा—आचार्यादीनां प्रतिमास्तूपप्रतिष्ठाक्षराणि कुत्र ग्रन्थे सन्तीति, प्रश्नोऽत्रोत्तरं—आचार्यमूर्त्तिस्तूपयोः स्थापनमन्त्रो यथा ' ॐनमो
आयरिआणं भगवताण नाणीणं पचविहायारसुट्ठियाण इह भगवंतो आयरिआ अवयरतु, साहुसाहुणीसावयसाविआकयं पूअं पडिच्छंतु, सव्वसिद्धिं
दिसतु स्वाहा ' अनेन मन्त्रेण त्रिर्वासक्षेपः, उपाध्यायमूर्त्तिस्तूपयोः ' ॐनमो उवज्झायाण भगवंताणं बारसंगपढगपढगाणं सुअहराणं सज्झायज्झा-
णासत्ताणं इह उवज्झाया भगवतो अवयरंतु साहुसाहुणीसावयसाविआकयं पूअं पडिच्छंतु, सव्वसिद्धिं दिसतु, ' अनेन मन्त्रेण त्रिर्वासक्षेपः, साधु-
साध्वीमूर्त्तिस्तूपयोः ॐनमो सव्वसाहूणं भगवताणं पंचमहव्वयधराण पंचसमिआणं तिगुत्ताणं तवनियमनाणदसणजुत्ताणं मुक्खसाहगाणं साहुणो भग-
वंतो इह अवयरतु भगवइओ साहुणीओ इह अवयरंतु साहुसाहुणीसावयसाविआकय पूअं पडिच्छंतु, सव्वसिद्धि दिसंतु स्वाहा,' अनेन मन्त्रेण
त्रिर्वासक्षेप इत्याचारदिनकरे श्रीवर्द्धमानसूरिकृते इत्यादिग्रन्थानुसारेणाचार्यादीना प्रतिमास्तूपप्रतिष्ठापनाक्षराणि ज्ञेयानीति ॥ ७ ॥

तथा—श्रावकाश्चतुष्पर्व्यां चतुर्थादिकं कुर्वन्ति, सा का चतुष्पर्वीति ? प्रश्नोऽत्रोत्तरं—चतुर्दशी अष्टमी अमावास्या पूर्णिमा एताश्चतस्र-

श्चतुष्पर्व्य इति **योगशास्त्रवृत्तौ** ' चतुष्पर्व्यां चतुर्थाद्ये'तत्श्लोकव्याख्याने, तथा **प्रवचसारोद्धारवृत्तौ** चतुष्पर्व्वी अष्टमीचतुर्दश्यमावस्यापूर्णिमा-लक्षणा उक्ताः, तथा पर्व्वाणि चैवमूचुः—'अट्ठमी चाउद्दसि पुण्णिमा य तह अमावसा हवइ प०ं। मासंमि पव्वछक्कं, तिन्नि अ पव्वाइं पक्खंमि ॥१॥ बीआ पंचमी अट्ठमि, इगारसी चउदसी पण तिहीओ। एआओ सुहतिहीओ, गोअमगणहारिणा भणिआ ॥ २ ॥ बीआ दुविहे धम्मे पंचमि नाणेसु अट्ठमी कम्मे। एगारसी अंगाणं, चउद्दसी चउदपुव्वाणं ॥ ३ ॥' एवं पञ्चपर्व्वी पूर्णिमामावास्याभ्यां पट्पर्व्वी च प्रतिपक्षमुत्कृष्टतः स्यादिति **श्राद्धविधौ** **प्रतिक्रमणसूत्रवृत्तौ** च। तथा **श्रीभगवतीवृत्तौ** ' चउद्दसट्ठमुद्दिट्ठपुण्णमासिणीसु' इत्यत्रोद्दिष्टा—अमावास्या प्रोक्ताऽस्ति, **विपाकवृत्तावपि** तथैव, किंच ' सते बले वीरिअपुरिसक्कारपरक्कमे अट्ठमीचउद्दसीनाणपंचमीपज्जोसवणाचाउम्मासिएसु चउत्थछट्ठमे न करिज्जा पच्छित्त ' मित्येकोनविंशपञ्चाशकवृत्त्यादिष्वनेकग्रन्थेपु पञ्चमी भणितास्ति, पञ्चम्याः पर्व्वत्वं महानिशीथेऽप्युक्तमस्ति, नन्वेव सति त्रिपर्व्वी चतुष्पर्वी पञ्चपर्व्वी पट्पर्व्वी वा तपःशीलादिनाऽऽराधनीयोच्यते, स्वशक्त्यपेक्ष सर्व्वामेका वा तामाराधयतां न कश्चिद्दोषः, तथा—' छण्हं तिहीण मज्झंमि, का तिही अज्जवासरे ? ' इत्यादिगाथा श्राद्धदिनकृत्यसूत्रेऽस्ति तद्व्याख्यानं च—८ १४ १५ एताः सितेतरभेदात्पट्तिथय इति इत्यादिग्रन्थानुसारेणाविच्छिन्नपरम्परया च सर्व्वा अपि अमावास्यापूर्णिमादितिथयः पर्वत्वेनाराध्या एवेति, अथ च—' चाउद्दसट्ठमुद्दिट्ठपुण्णमासिणीसु पडिपुण्ण'मित्यस्य व्याख्या—चतुर्दश्यष्टम्यौ प्रतीते, उद्दिष्टासु महाकल्याणकसम्बन्धितया पुण्यतिथित्वेन प्रख्यातासु, पौर्णमासीषु तिसृषु चतुर्मासकसम्बन्धिनीष्विति सूत्रकृताङ्गद्वितीयश्रुतस्कन्धसूत्रवृत्तौ लेपश्रावकाधिकारे इत्येतत्पर्वाराधनं चरितानुवादरूपं, शतवारं पञ्चमश्राद्धप्रतिमावाहककार्तिकश्रेष्ठिकवत्तु विधिवादरूपं, तल्लक्षण पुनरेकेन केनचिद्यत्क्रियानुष्ठानमाचरितं स चरितानुवादः, सर्व्वैरपि यत्क्रियानुष्ठानं क्रियते स विधिवादस्तु सर्व्वैरपि स्वीकर्त्तव्य एव, न तु चरितानुवाद इति ॥ ८ ॥

तथा श्रावकाणामुपधानवहनं विना नमस्कारादिपठनं शुध्यति नवेति ? प्रश्नोऽत्रोत्तरं—यथा यतीना योगवहनं विना सिद्धान्तवाचनपाठनादि न शुद्ध्यति, तथोपधानतपोऽन्तरा श्राद्धानामपि नमस्कारादिसूत्रभणनगणनादि न शुद्ध्यति, यदुक्तं महानिशीथे–'से भयवं ! सुदुक्करं पंचमंगलमहासुअखंधस्स विणओवहाण पन्नत्तं, एसा निअतणा कहं बालेहिं किज्जई ? गो० ! जे णं केणइ न इच्छेज्जा एयं नियंतण अविणओवहाणेणं पचमंगलसुअनाणमहिज्जइ अज्झावेइ वा अज्झावयमाणस्स वा अणुन्न पयाइ से णं न भवेज्जा पिअधम्मे न हवेज्जा दढधम्मे न हवेज्जा भत्तिजुए, हीलिज्जा सुत्तं हीलिज्जा अत्थं हीलिज्जा सुत्तत्थोभए हीलिज्जा गुरुं, जे णं हीलिज्जा सुत्तं जाव हीलिज्जा गुरुं से ण आसाएज्जा अतीताणागयवट्टमाणे तित्थयरे आसाएज्जा आयरिअउवज्झायसाहुणो, जे णं आसाएज्जा सुअनाणमरिहंतसिद्धसाहू, तस्स णं अणंतसंसारसागरमाहिंडेमाणस्स तासु तासु संवुडविअडासु चुलसीइलक्खपरिसंकडासु सीओसिणमिस्सजोणिसु सूइरं निअंतणा इति,' परं येन प्राग् नमस्कारादिसूत्राण्यधीतानि, तेनापि यथायोग निर्विलम्बमेवोपधानानि विधिनाऽवश्यं वहनीयानि । सम्प्रति तु द्रव्यक्षेत्रकालाद्यपेक्षया लाभालाभं विभाव्याचरणयोपधानतपो विनाऽपि नमस्कारादिसूत्रपाठादिभणनं कार्यमाणं दृश्यते, आचरणायाश्च लक्षणमिदं कल्पभाष्ये उपदेशपदे च यथा–"असढेण समाइन्नं, ज कत्थइ केणई असावज्ज । न निवारिअमन्नेहिं, बहुमणुमयमेअमायरिअं " ॥ १ ॥ आचरणा च जिनाज्ञासमानैव, यद्भणितं भाष्यादौ–"असढाइन्नऽणवज्जं, गीअत्थअवारिअंति मज्झत्था । आयरणाविहु आणात्ति, वयणओ सुबहुमन्नंति " ॥ १ ॥ इति ध्येयम् ॥ ९ ॥

तथा—श्रीवीरतीर्थं कियत्कालं यावत् भवतीति ? प्रश्नोऽत्रोत्तरं–'जबुद्दीवे २ भारहे वासे इमीसे ओसप्पिणीए देवाणुप्पिआणं केवतिअं कालं तित्थं अणुसज्जिस्सइ ?' इति भगवतीसूत्रविंशतितमशतकाष्टमोद्देशकानुसारेणैकविंशतिसहस्रवर्षाणि यावत् श्रीवीरतीर्थं प्रवर्त्तिष्यते, किञ्च 'तित्थं भंते ! तित्थं ? तित्थयरे तित्थं ? गो० अरहा ताव नियमा तित्थंकरे, तित्थं पुण चाउवण्णाइण्णे समणसंघो, तंजहा–समणा समणीओ सावगा साविआओ

अत्ति ' भगवत्यां, " दुप्पसहंतं चरणं, भणिअं जं भगवया इहं खेत्ते । आणाजुत्तेणामिणं, ण होइ अहुणात्ति वामोहो " ॥ १ ॥ इत्युपदेशपदवचनाद् दुष्प्रसहान्तं यावच्चारित्रं भविष्यतीति ॥ १० ॥

तथा–नारकाः पूर्व्वभवकृतदुष्कृतं जातिस्मरणेन जानन्त्यवधिज्ञानेन वेति ? प्रश्नोऽत्रोत्तरं–' नारका नानाविधानि पापानि कृत्वा नरके व्रजन्ति, तत्रैतानि तैः स्मारितपूर्व्वभवदुष्कृतानि भवप्रत्ययजातिस्मरणेन नारकाः स्वयमपि जानन्ति, अवधिना तु न किञ्चिदवगच्छन्ति, तस्योत्कृष्टतोऽपि तेषां योजनप्रमाणत्वादिति भवभावनासूत्रवृत्तौ, एतदनुसारेण नारकाः पूर्व्वभवकृतदुष्कृतं भवप्रत्ययिकजातिस्मरणेन जानन्तीति ॥ ११ ॥

तथा—मुण्डकेवली किंलक्षणो भवतीति प्रश्नोऽत्रोत्तरं–" संविग्नो भवनिर्वेदादात्मनिःसरणं तु यः । आत्मार्थ संप्रवृत्तोऽसौ, सदा स्यान्मुण्डकेवली " ॥ १ ॥ इति पञ्चसङ्ग्रहवृत्तौ, तदनुसारेण यः पुनः सम्यक्त्वावाप्तौ भवनैर्गुण्यदर्शनतस्तन्निर्वेदादात्मनिस्सरणमेव केवलमभिवाञ्छति, तथैव चेष्टते, स मुण्डकेवली भवतीति ॥ १२ ॥

तथा—यस्मिन् काले कालान्तरे वा यावन्तो युगलिनस्तास्मिन् तावन्त एव न्यूनाधिका वेति ? प्रश्नोऽत्रोत्तरं–यस्मिन् काले यावन्तो युगलिनस्तस्मिन् काले तु तावन्त एव भवन्तीति, कालान्तरे च भरतैरावतयोर्युग्मिनां न्यूनाधिकत्वं, देवकुर्व्वादिषु तु जातु तत्संहरणसम्भवेऽपि कुतश्चित्तदानयनमपि भवतीति न तत्र न्यूनाधिक्यमिति ॥ १३ ॥

तथा—कश्चित् सचित्तपरिहारी कारणे यदि रात्रौ जलं पिबति तदोष्णमप्रासुकं वेति ? प्रश्नोऽत्रोत्तरं–यदि सचित्तपरिहारी कारणे जलं पिबति तदोष्णमेवेति ॥ १४ ॥

तथा—अप्रतिलेखितस्थापनाग्रे प्रावृतचोलपट्टगीतार्थस्याग्रे च काजकोद्धरणादीर्यापथिकीप्रतिक्रमणं शुध्यति नवेति ? प्रश्नोऽत्रोत्तरं—तत्पुरः सकलक्रियानुष्ठानेर्यापथिकीप्रतिक्रमणं शुध्यतीति ॥ १५ ॥

तथा—श्रीभगवतीसूत्रोक्तत्रिविधंत्रिविधेनेतिप्रत्याख्यानवता प्रतिमाधरश्राद्धेन प्रतिलेखितस्थापनाग्रे साधूनामीर्यापथिकीप्रतिक्रमणाद्यनुष्ठानं शुध्यति ? किंवा इर्यापथिकीप्रतिक्रमणमेवेति ? प्रश्नोऽत्रोत्तरं—तदग्रे साधोरीर्यापथिकीप्रतिक्रमणमेव शुध्यति, नान्यदनुष्ठानमिति ॥ १६ ॥

तथा—गुरुसमीपे उपधानादिक्रिया कुर्वतः श्राद्धादेरन्तरालस्थापनाया गुरोश्चान्तराले पञ्चेन्द्रियगमने अग्रे भवति नवेति ? प्रश्नोऽत्रोत्तरं—अग्रे भवतीति ॥ १७ ॥

तथा—सीता जनकराज्ञ. ( जस्य ) पुत्री रावणपुत्री वेति ? प्रश्नोऽत्रोत्तरं—बहुषु ग्रन्थेषु जनकराजपुत्री वसुदेवहिण्डौ रावणपुत्री चेति ॥ १८ ॥

तथा—प्रथमान्तिमतीर्थकृत्तीर्थश्राद्धाना मध्यमजिनश्राद्धाना च वर्णान्तरोपेता मुखवस्त्रिका शुद्धचति नवेति ? प्रश्नोऽत्रोत्तरं—प्रथमान्तिमतीर्थकृत्श्राद्धानां मुखवस्त्रिका श्वेता कल्पते, मध्यमजिनश्राद्धानां तु सा पञ्चवर्णापि स्यादिति ॥ १९ ॥

तथा—पञ्चदशशततापसानां गौतमेन लब्धिपरमान्नेन पारणा कारिता, तत्परमान्न वैक्रियमन्यद्वेति ? प्रश्नोऽत्रोत्तरं न तद्वैक्रियं, किन्त्वक्षीणमहानसीलब्ध्यैव तत्परमान्न तावज्जातमिति ॥ २० ॥

तथा—अत्र केचन भूकटिका वदन्ति यथा श्रीमता त्रिफलाद्युत्कटद्रव्यनिष्पन्नचूर्णप्रक्षेपे प्रासुकं पानीयं,तथाऽस्माकमप्युत्कटद्रव्यजनित

चूर्णप्रक्षेपे धान्यादि प्रासुकीभवतीति किमत्र बाधकमिति ? **प्रश्नोऽत्रोत्तरं**—भूकटिकक्रताशङ्कामाश्रित्य यथा त्रिफलाप्रक्षेपादुदके वर्णादिपरावर्त्तो भवति तथा यदि धान्यफलादावपि भवेत्तदोदकवद्धान्यादिकं प्रासुकं भवति, न च तथा, तस्मात्कथं प्रासुकं तदिति ॥ २१ ॥

तथैर्यापथिकी द्रव्यतः क्षेत्रत. कालतो भावतश्च कथमायातीति **प्रश्नोऽत्रोत्तरं**—द्रव्यतः सचित्तादिस्पर्शे क्षेत्रतः शतहस्ताद्ब-हिर्गमने ऐर्यापथिक्यायातीत्यक्षराण्यावश्यकजीतकल्पसूत्रवृत्त्यादौ सन्ति, कालतो भावतश्चैर्यापथिकीसमागमने व्यक्त्याक्षराणि शास्त्रे नोपलभ्यन्त इति ॥ २२ ॥

तथाऽऽवश्यकयोगसम्बद्धदशवैकालिकयोगोद्वहनं शुद्धयति नवेति ? **प्रश्नोऽत्रोत्तरं**—आवश्यकयोगालोचनां विधाय पश्चात्तत्सम्बद्धदशवैकालि-कयोगप्रवेशः शुद्धयतीति ॥ २३ ॥

तथा—श्रुतस्कन्धादिसमुद्देशानुज्ञादौ यदा समुद्देशाद्दिनवृद्धिर्जाता तदा तद्दिनं कारयित्वाऽग्रेतनदिनेऽनुज्ञानन्दिः क्रियते ? किं वा सम्बद्ध-तयाऽनुज्ञानन्दि विधाय तृतीयदिने तद्दिनवृद्धिः कार्यत इति, **प्रश्नोऽत्रोत्तरं**—समुद्देशक्रियाशुद्धौ तद्दिनवृद्धौ च सम्बद्धतयाऽनुज्ञानन्दिं विधाय पश्चाद्दिनवृद्धिः कार्यते, चेत् समुद्देशक्रियासम्बन्धिनी दिनवृद्धिर्ज्जायते तदा तृतीयदिनेऽनुज्ञानन्दिः क्रियत इति ॥ २४ ॥

तथा—विक्रयकारिसमुच्छेदितनामलाञ्छनानां प्रतिष्ठिताईत्प्रतिमानां पुनर्लक्ष्मादिकरणं शुद्धयति नवेति **प्रश्नोऽत्रोत्तरं**—तासामभिधानलक्ष्मादि-करणं प्रायो न शुध्यति, कदाचित्कारणे यद्यावश्यकं कर्त्तव्यं स्यात् तदा तद्विधानानन्तरं प्रतिष्ठितवासक्षेपादिना शुद्धिर्भवतीति श्रीभगवत्पादा-नामनुशिष्टिरिति ॥ २५ ॥

तथा—' बारसजोअण उसहे ' इत्येतद्गाथानुसारेण श्रीवृषभादितीर्थकृता समवसरणमानमुत्सेधाङ्गुलनिष्पन्नयोजनैरुच्यतेऽन्यथा वेति प्रश्नोऽत्रोत्तरं—' बारसजोअण उसहे ' इत्यनया गाथयोत्सेधाङ्गुलयोजनैर्वृषभादितीर्थकृता समवसरणमान मतान्तरेणोक्तं दृश्यते, परमस्या गाथायाः पारम्पर्यं न ज्ञायते इति समवसरणावचूर्णाविति ॥ २६ ॥

तथा—श्रीआदिदेवस्य श्रेयांसेन बहुभिरिक्षुरसकुम्भैः पारणा कारितातैकेनैवेक्षुरसकुम्भेनेति साक्षरं प्रसाद्यामिति प्रश्नोऽत्रोत्तरं—"मत्वेति प्रमद्रोत्पन्नरोमाञ्चः सोमभूप्रभुः । उत्पाट्येक्षुरसैः पूर्णान्, कुम्भानागाज्जिनान्तिकम्" ॥ १ ॥ इति ऋषिमण्डलवृत्तौ ७ पत्रे "तावदावसथद्वारे, राजसूनोरुपायने । केनचिच्चाक्रिरे कुम्भा, नवेक्षुरससम्भृताः ॥ २६१ ॥ श्रेयांसो जातिस्मरणाद्भिक्षादोषोज्झित रसम् । मत्वा कल्प्यममुं स्वामिन् !, गृहाणेत्यभ्यधात्प्रभुम् ॥ २६२ ॥ प्रभुणाप्यञ्जलीकृत्य, पाणिपात्रे पुरो धृते । स रसं कलशश्रेण्याश्चिक्षेपेक्षुसमुद्भवम् ॥ २६२ ॥" इति श्री अमरकविकृते पद्मानन्दकाव्ये त्रयोदशसर्गे "अत्रान्तरे कुमारस्य, प्राभृते केनचिन्मुदा । नवेक्षुरससम्पूर्णा, ढौकयाञ्चक्रिरे घटा. ॥ ९० ॥ ततो विज्ञातनिर्दोषभिक्षादानविधिस्स तु । गृह्यतां कल्पनीयोऽयं, रस इत्यवदद्विभुम् ॥ ९१ ॥ प्रभुरप्यञ्जलीकृत्य, पाणिपात्रमधारयत् । उत्क्षिप्योत्क्षिप्य सोऽपीक्षुरसकुम्भानलोठयत् ." ॥ ९२ ॥ इति श्री हेमचन्द्रसूरिकृतऋषभदेवचरित्रे, तथैवान्तर्वाच्ये च वसुदेवहिण्डौ प्रथमखण्डे च इत्यादिग्रन्थाक्षरानुसारेण बहुभिरिक्षुरसघटैः पारणा जातेति । तथा—ताहे सयं चेव खोअरस रसघडगं गहाय भावसुद्धेणं पडिगाहगसुद्धेण तिविहेणं तिकरणसुद्धेणं दाणेणं पडिलाभेस्सामित्ति इत्याद्यावश्यकचूर्ण्यावश्यकनिर्युक्तिहारिभद्रवृत्तितद्द्वादशसहस्रीवृत्तिवर्द्धमानसूरिकृतऋषभचरित्रकल्पाकिरणावलीप्रभृतिग्रन्थानुसारेण त्वेकेनैवेक्षुरसघटेन पारणा कारितेति ज्ञायते । एतदाश्रित्य निर्णयस्तु र.र्व्वविद्वेद्य इति ॥ ९३ ॥ ॥ २७ ॥

तथा—तृतीयाद्युपधानेषु सप्त क्षमाश्रमणानि दाप्यन्ते, तत् कुत्र विधिपत्रेऽस्तीति ? प्रश्नोऽत्रोत्तरं—तृतीयाद्युपधानेषु तद्विधिदर्शकपत्रादौ

सप्तक्षमाश्रमणदानविधानं न दृश्यते, तथापि श्री परमगुरूणामनुशिष्टिरस्ति, यतोऽग्रे मालापरिधानसमये तेषां समुद्देशानुज्ञयोर्विधीयमानत्वादुद्देशोऽपि कर्त्तव्य इति तत्सप्तक्षमाश्रमणानि देयानीति ॥ २८ ॥

तथा—' पणवीसजोअणे ' त्यादि गाथा कुत्रान्तर्वाच्येष्वस्ति, कथं च घटनेति ? प्रश्नोऽत्रोत्तरं—इयं गाथा भूयःस्वन्तर्वाच्यपुस्तकेषु न दृश्यते, कल्पकिरणावलीवृत्तौ तु दृश्यते, गणनाघटना त्विन्द्रमात्रनिर्मापितकलशप्रमाणापेक्षया कर्त्तुं न शक्यते, परमिन्द्रसामानिकविमानेन्द्रप्रकीर्णकदेवकृतकारितैः सा सम्भवत्यपि, किञ्च 'तानेव बिभराञ्चक्रुः, कुम्भान् कुम्भान्तराम्बुभिः । आभियोगिकगीर्वाणाः, कुर्वाणाः स्वामिशासनम् ॥ ५३२ ॥ स्वामिस्नात्रे हरे रिक्तरिक्तान् कुम्भानपूरयन् । अमराश्चक्रिणो यक्षा, निधानकलशा इव ॥ ५३६ ॥ रिक्तारिक्ता भृतभृता, रेजिरे सञ्चरिष्णवः । भूयो भूयः कलशास्तेऽरघट्टघटिका इव ॥ ५३७ ॥ एवमच्युतनाथेन, यथेष्टं कुम्भकोटिभिः । स्वामिनो विदधे स्नात्रं, चित्रमात्मा पवित्रितः ॥ ५३८ ॥ " इति त्रिषष्टीयऋषभचरित्रानुसारेण केचित्कलशाः स्नात्रोपयोगिनः परं स्थाप्याः, केचित्कलशा आभरणार्थमेव तिष्ठन्तीति, तदपेक्षया वा सा गणना सञ्जाघटीत्येतद्गाथायास्तथाविधस्थानाभावे सर्व्वं सर्व्वविद्वेद्यमिति ॥ २९ ॥

तथा—युगालिकशरीराणि सुराः समुद्रे क्षिपन्त्यथवा स्वयं विनश्वरीभवन्तीति प्रश्नोऽत्रोत्तरं—' पुरा हि मृतमिथुनशरीराणि महाखगाः । नीडकाष्ठमिवोत्पाट्य, सद्यश्चिक्षिपुरम्बुधौ ॥ १ ॥ " इति त्रिषष्टीयऋषभदेवचरित्रवचनात् समुद्रे युगालिकशरीराणि क्षिपन्त्यन्ययुगलिकक्षेत्रेऽप्येवं सम्भाव्यते, आरण्यकपशूना निसर्गतो मृतानां यथा किमप्यवयवादिक नोपलभ्यते तथा तेषामपीत्येषापि सम्भावना सञ्जायत इति ॥ ३० ॥

तथाऽन्तकृच्छब्दस्य कोऽर्थः इति प्रश्नोऽत्रोत्तरं—ज्ञानावरणीयादिकर्मान्तकृत् सन् सिद्धिं गत इत्यर्थ इत्यावश्यकहारिभद्रीवृत्तौ " अट्ठंतकडा रामा " इति गाथाव्याख्याने ॥ ३१ ॥

सेवतिकानां पानीयखण्डाभ्यामेकादिनोनपूर्वोक्तत्रिंशदादिदिनेषु मोदका वध्यन्ते, ते मोदकाः पुनस्त्रिंशदादिदिनानि यावद्विहर्त्तुं कल्पते नवेति ? प्रश्नोऽत्रोत्तरं-पानीयखण्डाभ्यां वर्ण्णरसगन्धादिपरावर्त्तनात्पुनर्यथोक्तकालं यावत्ते मोदका मुनीनां विहर्त्तुं कल्पन्त इति सम्भाव्यते, परमेतदर्थे विशेषाक्षराणि दृष्टानि न स्मर्यन्त इति ॥ ३५ ॥

तथा—येन साधुना ये योगा न व्यूढास्तेन तद्योगानां प्रवेशोत्तारणं कार्यते नवेति ? प्रश्नोऽत्रोत्तरं-मुख्यवृत्त्या येन ये योगा व्यूढास्तेन तेषामेव प्रवेशोत्तारणादिकं विधीयते, तदभावे तु नन्द्यनुयोगद्वारयोगवाहिना सर्व्वेष्वव्यूढयोगेषु प्रवेशस्तेभ्यो निर्गमनं च कार्यते, तयोः क्रियायाः असम्बद्धत्वादिति परम्पराऽप्यस्ति, परं सर्व्वथैव तत्क्रिया कारिता न शुद्ध्यतीति ॥ ३६ ॥

तथा—चतुर्निकायेषु विमानाधिपतयः सम्यग्दृष्टयो मिथ्यादृष्टयो वेति ? प्रश्नोऽत्रोत्तरं—विमानाधिपतितया यो देवविशेष उत्पद्यते स सम्यग्दृष्टिरेव भवति, न कदापि स मिथ्यादृष्टिरित्यनादिकालीना जगद्व्यवस्थितिः, यतो विमानाधिपतितयोत्पद्यमानो देवः ' किं मे पुव्वं करणिज्जं ? किं मे पच्छा करणिज्जं ? किं मे पुव्वं सेयं ? किं मे पच्छा सेयं ? किं मे पुव्विंपि पच्छावि हियाए सुहाए खमाए निस्सेसाए आणुगामिअत्ताए भविस्सइ ? ' इत्यादिराजप्रश्नीयोक्तशुभाध्यवसायविशेषेण सम्यग्दृष्टिरेवावसीयते, सम्यक्त्वमन्तरेण तथाध्यवसायरूपपरिणामानुत्पत्तेः, न चायं प्रकारो राजप्रश्नीयाद्युपाङ्गे सूर्याभदेवसम्बन्धित्वाच्चरितानुवादरूपोऽतः कथं सर्व्वेषामप्यन्यविमानाधिपतित्वेनोत्पद्यमानानां देवविशेषाणामयमेव प्रकार इति शङ्कनीयं, ग्रन्थान्तरे प्रकारान्तरस्यानभिधानाद् अन्येषामपि विमानाधिपतितयोत्पद्यमानानां तथाप्रकारस्य वक्तुमौचित्याद्, अत एव विजयदेवाधिकारे तथाप्रकार एव विजयराजधान्यामुत्पन्नमात्रस्य विजयदेवस्यागमे भणित इति । किञ्च—विमानाधिपतिदेवानां मिथ्यादृष्टित्वेऽभ्युपगम्यमाने तद्विमानगतसिद्धायतनजिनप्रतिमानां मिथ्यादृष्टिभावितत्वेन भावग्रामताव्याघातः स्यात्, सम्यग्दृष्टिभावितानामेव—सम्यग्दृष्टिपरिगृहीतानामेवेत्यर्थः, तासां भावग्रामतया

प्रवचने प्रतिपादनात्, न तु मिथ्यादृष्टिपरिगृहीतानामपीति, तथानोक्त— ' जा सम्मभाविआओ, पडिमा इयरा ण भावगामो उत्ति ' बृहत्कल्प-निर्युक्तौ तद्वृत्त्येकदेशो यथा याः सम्यग्दृष्टिपरिगृहीताः प्रतिमाः ता भावग्राम उच्यते, नेतरा—मिथ्यादृष्टिपरिगृहीता इत्यादि, किञ्च—विमानाधिपतयो देवाः परैर्मिथ्यादृशोऽभिधीयन्ते, ते देवाः किं तीर्थकृतामाशातनां परिहरन्ति नवा ?, यदि परिहरन्तीत्युच्यते, तदा मिथ्यादृष्टित्वं तेषां दत्ताञ्जल्येव सम्पन्नं, ' आसायणवज्जणाओ सम्मत्त ' मिति वचनेन सम्यक्त्वस्यैवाभिधानात्, तत्राशातनापरिहारोऽपि, " अहो देवाण य सीलं, विसयविसमोहिआवि जिणभवणे । अच्छरसाईहिं समं, हासं कीलं च वज्जाति ॥ १ ॥ इतिप्रवचनाभिहित एव, नापरः, तस्यागमेऽनुक्तेः, स न मिथ्यादृष्टित्वे सति स्वप्नेऽपि न सम्भवति, किन्तु नियमतः सम्यग्दृशामेवात एव तथाशातनावर्ज्जनस्वरूपशालिनां देवविशेषाणा वर्णवादोऽर्हतां वर्णवादवत्प्रेत्य सुलभबोधिताहेतुर्भणितः, तथा च स्थानाङ्गसूत्रम्—' पंचहिं ठाणेहिं जीवा सुलभबोहिअत्ताए कम्म पकरेंति, अरहंताण वण्णं वयमाणे, जाव विविक्कतवबंभचेराणं देवाणं वण्णं वयमाणे ' वृत्तिदेशो यथा—तत्र देवानां वर्णवादो यथा ' अहो देवाण य सीलं ' इत्यादि । यच्च कैश्चिदाशङ्क्यते—मिथ्यादृशोऽपि स्थानकमाहात्म्यात्तथा तदाशातना वर्ज्जयिष्यन्तीति, तदपि परास्तमवसातव्य, यतो मिथ्यादृशा दूरे वर्णवादस्य सुलभबोधिताहेतुत्वं प्रत्युत सम्यक्त्वदूषकत्वमेव तस्यागमेऽभिहितं, यदुक्तम्—" शङ्का १ काङ्क्षा २ विचिकित्सा ३ मिथ्यादृष्टिप्रशंसनम् ४ । तत्संस्तवश्च पञ्चापि ५, सम्यक्त्वं दूषयन्त्यमी ॥ १ ॥ इति योगशास्त्रे । अथ तं न परिहरन्तीति द्वितीयपक्षः, स तूपेक्षणीय एव, आगमे सिद्धायतनेष्वाशातनापरिहरणस्यैवाभिधानात् 'बहूणं देवाणं देवीण य वंदणिज्जाओ अच्चणिज्जाओ,' इत्यादिना वन्दनपूजनादेराशातनापरिहारपूर्व्वकतयैव भावादिति । आस्तां सिद्धायतनेषु, यत्र सुधर्म्मासभासु स्वमाणवकचैत्यस्तम्भेषु श्रीमदर्हद्दंष्ट्रालंकृताः समुद्गकास्तिष्ठन्ति तत्रापि देवा नैव मैथुनादिप्रवृत्तिकरणादिनाऽऽशातना कुर्व्वन्तीति । तस्मात्सिद्धं सुलभबोधिताहेतुतीर्थकृदाशातनापरिहारान्यथानुपपत्त्या विमानाधिपतयः सम्यग्दृशो भवन्तीति । किञ्च—यदि विमानाधि-

पतिर्देवो मिथ्यादृष्टिरपि जिनप्रतिमाः पूजयतीति कल्पस्थितिरिति परे कल्पयन्ति, तथा तद्देवानुवृत्त्या परेऽपि तद्विमानवासिनो देवा मिथ्यादृशः किं न पूजयन्तीति परिकल्पयन्ति, सम्यग्दृष्टयस्तु इमा अर्हत्प्रतिमा मोक्षाय भविष्यन्तीति बुद्ध्या पूजयन्ति, ( एवं चेत् ) 'सव्वेसिं देवाणं सव्वेसिं देवीण य अच्चणिज्जे ' इत्यादिका पाठरचना कृताऽभविष्यत्, परं सा न कृता, प्रत्युत ' बहूणं देवाणं देवीण य अच्चणिज्जे ' इत्यादिका पाठरचना कृता, ततोऽवसीयते—ये एव सम्यग्दृशो देवास्त एव जिनप्रतिमाः पूजयन्ति शक्रस्तवं च पठन्तीति सुधीभिः परिभावनीयं । यत्तु ' एवं खलु देवाणुप्पिआणं अंतेवासी तीसए णामं अणगारे छट्ठंछट्ठेण जाव सक्कस्स देविंदस्स देवरण्णो सामाणिआ देवा केमहिड्ढिया ' इति भगवत्यां ३ शतके १ उद्देशके शक्रसामानिकानां निजनिजविमानेषूत्पत्तिभणनात्तदाधिपत्यभणनाच्च सर्व्वे सामानिकसुरा विमानाधिपतयो भणिताः, तथाभणने च तदन्तर्गतः सङ्गमकामरोऽपि विमानाधिपतिरेव भणितोऽवसेयः, स चाभव्यत्वान्निय-मात् मिथ्यादृष्टिरेवेति कथं सम्यग्दृश एव विमानाधिपतयः सर्व्वेऽपीति वक्तुं पार्यते इति विकल्पयन्ति, तदपि न सम्यग्, प्रवचनाभिप्रायस्य तैरनाकलनात्, न हि ' सयंसि विमाणंसि ' इति पाठबलेन विमानाधिपतित्वं सामानिकाना सेत्स्यति, तथापाठस्य विमानाधिपतित्वं विनाऽप्यागमे उपलम्भात्, यतो ज्ञाताधर्म्मकथाङ्गे कालिदेव्याः कालावतंसकविमाने उत्पत्तिरभिहिता, सूरप्रभादेव्याः सूरप्रभे विमाने यावत्पद्मादेव्याः सौधर्मे कल्पे पद्मावतंसके विमाने तथा कृष्णादेव्या ईशाने कल्पे कृष्णावतंसकविमाने उत्पत्तिर्भणिता, देवीनां चाग्रमहिषीणां न भवनानि न विमानानि प्रवचनेऽभिहितानि सन्ति, अपरिगृहीतदेवीनामेव विमानाना भणनात् । अयं च भावः-यथा देवीनां पृथग् विमानानि न सन्ति, परं मूलविमान-सम्बन्धिविमानैकदेशः स्वोत्पत्तियोग्यः तद्विमानत्वेन भणितः, एवं सामानिकानामपि शक्रविमानसम्बन्धी तदेकदेशः तदीयप्रभुतादिना नियमितः

१ इन्दुस्याधिपत्येऽप्येवंपाठ

चतुरशीति-तदीयविमानत्वेन भण्यमानो न दोषावह इति, तदभिव्यञ्जक जिनजन्मोत्सवादौ शक्रसिंहासनमण्डनवत्तदग्रमहिषीसिंहासनमण्डनवच्च चतुरशीति-
तदीयविमानत्वेन भण्यमानो न दोषावह इति, तदभिव्यञ्जक जिनजन्मोत्सवादौ शक्रसिंहासनमण्डनवत्तदग्रमहिषीसिंहासनमण्डनवच्च कथमिव तेषां सिंहासनानि
सहस्रसामानिकदेवानामपि तदर्हसिंहासनमण्डनमेवात्रसेयं, यदि ते सामानिकाः शक्रविमानवासिनो न स्युः ततः कथमिव तेषां सिंहासनानि
शक्रविमाने मण्डितानि भवेयुरित्यपि स्वधिया पर्य्यालोच्यं, 'सयसि विमाणंसि' इत्यादि पाठावलोकनेऽपि न कोऽपि व्यामोहः कार्यः, एवं च विमाना-
धिपतयः सम्यग्दृशो भवन्तीति आगमिकयुक्तेः आगमप्रामाण्यात् तत्सिद्धस्यार्थस्यापि प्रामाणिकत्वं प्रतिपत्तव्यमेव, यदुक्तं,-- 'तह वक्खाणेअव्वं,
जहा जहा तस्स अवगमो होई। आगमिअमागमेणं, जुत्तीगम्मं तु जुत्तीए ॥ १ ॥ त्ति, पञ्चवस्तुके यथा, नवरं चन्द्रविमाने चन्द्र उत्पद्यते तत्सा-
मानिकात्मरक्षकादयश्चेति चन्द्रप्रज्ञप्त्यष्टादशप्राभृतवृत्तिप्रान्तेऽस्तीति अतोऽपि सङ्गमको न पृथक् विमानाधिपतिरित्यवसीयते। इति विमानाधिपत-
यस्सम्यग्दृष्टय एवेति व्यवस्थितम् ॥ ३७ ॥

तथा—समवसृतौ पुष्पाणि वैक्रियाण्यन्यानि वेति, प्रश्नोऽत्रोत्तरं—समवसरणे पुष्पाणि वैक्रियाण्यौदारिकाणि च जलस्थलसमुद्भवानि भवन्ति
इति समवायाङ्गसूत्रवृत्त्यादिभ्यो ज्ञेयमिति ॥ ३८ ॥

तथा—पञ्चविकृतिप्रत्याख्यानिना द्विघटिकानन्तर गुडमिश्रितचूरिमकं कल्पते नवेति? प्रश्नोऽत्रोत्तरं—पञ्चविकृतिप्रत्याख्यानवता द्विघटि-
कानन्तरं गुडमिश्रितचूरिमकं तद्दिने न कल्पते इति ॥ ३९ ॥

तथा—विकलेन्द्रियाश्च्युत्वा मनुष्यत्व प्राप्य मोक्ष यान्ति नवेति? प्रश्नोऽत्रोत्तरं—विकलेन्द्रियाः स्वभवतः च्युत्वा मनुष्यत्वं प्राप्य मोक्षं
न यान्ति, सर्वविरतिं च प्राप्नुवन्तीति संग्रहणीवृत्त्यादावुक्तमस्तीति ॥ ४० ॥

१ विचार्य सुधीभिर्देवेन्द्रस्तवादौ सामानिकाना विमानपार्थक्योक्ते ज्योतिष्कविमानाधिपतीना सर्वेषां सम्यग्दृष्टित्वे तत्संख्याविरोधात्

तथा—साधुवत्साध्वी चारणश्रमणलब्धिमती भवति नवेति ? प्रश्नोऽत्रोत्तरं—साधुवत्साध्वी चारणश्रमणलब्धिमती न भवति, यतः स्त्रीणां तल्लब्धिनिषेधो लब्धिस्तोत्रे दशाश्रुतस्कन्धे च कथितोऽस्तीति ॥ ४१ ॥

तथा—पञ्चानां निर्ग्रन्थानां मध्ये आहारकशरीरं कः करोतीति ? प्रश्नोऽत्रोत्तरं—पञ्चानां निर्ग्रन्थानां मध्ये कषायकुशीला निर्ग्रन्था आहारकशरीरं कुर्व्वन्तीति श्रीभगवतीसूत्रवृत्तौ २५ शतके पञ्चनिर्ग्रन्थीसूत्रावचूर्ण्णौ च प्रोक्तमस्तीति ॥ ४२ ॥

तथा—पञ्चमारके पक्षिणामायुः कियन्मानं विद्यते इति ? प्रश्नोऽत्रोत्तरं—" मणुआउ सम गयाई, हयाइ चउरंसऽजाइ अट्ठंसा । गोमहिसुट्टखराई, पणंस साणाइ दसमसा ॥ ४२ ॥ इच्चाइ तिरिच्छाणवि, पायं सव्वारएसु सारिच्छं । " इति वीरंजयसेहराभिधक्षेत्रविचारवृत्तौ कालसप्ततयामपि तथैव तिरश्चामपि प्रायः सर्व्वारकेषु साहश्यमिति भणनात्पञ्चमारकेऽपि पक्षिणामप्यायुर्मनुष्याद्यायुरपेक्षया हीयमान सम्भाव्यते, न तु क्वापि नामग्राहं चतुर्थभागादिनिश्चयः प्रतिपादितोऽस्तीति ॥ ४३ ॥

तथा—पाक्षिकचातुर्मासिकसांवत्सरिकक्षामणकानि तत्तपांसि च कियद्दिनानि यावत्कृतानि शुद्ध्यन्तीति ? प्रश्नोऽत्रोत्तरं—तत्क्षामणकानि तत्तपांसि न यथाक्रमं द्वितीयां पञ्चमीं दशमीं च यावत्कृतानि परम्परया शुद्ध्यन्ति, किञ्च पाक्षिकाद्यर्वागपि यथासम्भवं तत्तपांसि प्रापणीयानीति श्रद्धेयम् ॥ ४४ ॥

तथा—उद्योते उद्योतिका लगति नवेति ? प्रश्नोऽत्रोत्तरं—शरीरोद्योतिकयोरन्तराले चन्द्रोद्योते सत्युद्योतिका लगति, चन्द्रोद्योते शरीरलग्ने सति उद्योतिका न लगतीति परम्पराऽस्ति, तथा खरतरकृतसन्देहदोलावलीग्रन्थेऽपि तथैवोक्तमस्तीति ॥ ४५ ॥

तथा—श्राद्धाना त्रिफलापानीयग्रहणं कुत्र ग्रन्थेऽस्तीति ? प्रश्नोऽत्रोत्तरं–निशीथभाष्ये ' तुवरीफले अ पत्ते, रुक्खसिलातुप्पमद्दणाईसु । पासंदणे पवाए, आयवतत्ते वहे अवहे ॥ १ ॥ ' इयं गाथा, एतच्चूर्णौ व्याख्यालेशो यथा–तुवरीफला हरितक्यादय इत्यादिवचनात्रिफलामिश्रितं पानीयं प्रासुकं भवतीति ॥ ४६ ॥

तथा—तुर्यव्रतप्रत्याख्यानिश्रेष्ठिविजयश्राविकाविजययोः प्रतिलाभने चतुरशीतिसहस्रसाधुप्रतिलाभनपुण्यं भवतीति अक्षराणि कस्मिन् ग्रन्थे सन्ति ? कस्य तीर्थङ्करस्य वारके चैतज्जातमिति व्यक्त्या प्रसाद्यमिति ? प्रश्नोऽत्रोत्तरं–अयं सम्बन्धः प्रघोषेण श्रुतोऽस्ति, प्रकारान्तरेण त्वेवं यथा–वसन्तपुरे शिवङ्करश्रेष्ठी श्रीधर्मदाससूरिपार्श्वे हर्षेण भणति,–मम लक्षसाधर्मिकभोजनप्रदानमनोरथोऽस्ति, परं किं करोमि तथाविधं धनं नास्ति, गुरुभिरभाणि–याहि भृगुकच्छे श्रीमुनिसुव्रतस्वामिवन्दनार्थं, तत्र जिनदासाभिधः श्राद्धो भार्यासुहागदेवीयुतो वस्त्रभोजनाद्यलङ्करणीयस्तद्वात्सल्येन लक्षसाधर्मिकभोजनदानपुण्यं भविष्यति, ततस्तेन तथा कृतं, तदनु पृष्टं चतुष्पथे भो जिनदासः सुकृती कीदृशोऽस्ति सत्यो वा दाम्भिको वा ?, लोकाः कथयन्ति, शृणु–स सप्तवार्षिको गुरुमुखात् शीलोपदेशमालाव्याख्यां श्रुत्वा एकान्तरितब्रह्मव्रतं प्रतिपन्नवान्, एवं सुहागदेव्याऽपि साध्वीपार्श्वे एकान्तरितशीलव्रतं प्रतिपन्नं, भवितव्यवशात् परस्परं पाणिग्रहणं जातं, ततो यस्मिन् दिने जिनदासस्य मुत्कलं तस्मिन् दिने सुहागदेव्या नियमः यस्मिन्दिने तस्या मुत्कलं तस्मिन् तस्याभिग्रहः, तदनु गुरुसमीपे यावज्जीवमेव ब्रह्मव्रतं–प्रतिपन्नमिति उपदेशतरङ्गिणीग्रन्थानुसारेण उपदेशरसालग्रन्थानुसारेण च तत्प्रतिलाभने लक्षसाधर्मिकप्रतिलाभनपुण्यं भवतीत्यक्षराणि सन्ति ॥ ४७ ॥

तथा—गीतार्थेन प्रातः स्वाध्याये क्रियमाणे श्राद्धाः समायान्ति, ते सज्झाय करुं इत्यादेशं मार्गयन्ति उत सज्झाय सांभलुं इत्यादेशं इति ? प्रश्नोऽत्रोत्तरं–स्वाध्यायान्तः समागताः श्राद्धाः सज्झाय करु इत्यादेशं मार्गयन्तीति वृद्धपरम्पराऽस्तीति ॥ ४८ ॥

॥'

तथा—गणीनां पुरः श्राद्धा श्राद्धयश्च पौषधादेशं मार्गयन्ति तदा गणय आदेशं ददाति नवेति ? प्रश्नोऽत्रोत्तरं—उपधानादिविशेषक्रियां विना पौषधं कुर्व्वतां श्राद्धादीनां गणय आदेशं न ददाति, श्राद्धादयस्त्वादेशं मार्गयित्वा पौषधादिक्रियां कुर्व्वन्तीति वृद्धपरम्पराऽस्तीति ॥ ४९ ॥

तथा—केवलिभिर्यस्मिन् काले येषां जीवानां मोक्षगमनं दृष्ट तस्मिन्नेव काले ते जीवा मोक्षं यान्ति नवेति ? केचन वदन्ति—पुण्यं पापं च कुर्व्वतां जीवानां कालस्थितेर्हानिर्वृद्धिश्च भवतीति ? प्रश्नोऽत्रोत्तरं—येषां जीवानां यस्मिन् काले केवलिभिर्मोक्षगमनं दृष्टमस्ति तस्मिन्नेव काले ते जीवा मोक्षं यान्ति, परं केवलिभिः सर्व्वसामग्र्यपि सहैव दृष्टाऽस्ति, तस्मान्न काऽप्याशङ्केति ॥ ५० ॥

तथा—सन्ध्याप्रतिक्रमणे षडावश्यकसूत्राणि कानीति ? प्रश्नोऽत्रोत्तरं—नमो अरिहंताणमित्यादि सम्पूर्णनमस्कारः करेमि भंते ! सामाइअमित्यादितः अप्पाणं वोसिरामीत्यन्तं प्रथमं सामायिकाध्ययनम् १ ॥ लोगस्स उज्जोअगरे इत्यादितः सिद्धा सिद्धिं मम दिसंतु इत्यन्तं द्वितीयं चतुर्विंशति-स्तवाध्ययनम् २ ॥ इच्छामि खमासमणो ! वंदिउं जावणिज्जाए निसीहिआए अणुजाणह मे मिउग्गहमित्यादि तृतीयं वन्दनकाध्ययनम् ३ ॥ चत्तारि मङ्गलं, इच्छामि पडिक्कमिउं जो मे देवसिओ, इच्छामि पडिक्क० इरिआवहिआए० इच्छामि पडिक्कमिउं पगामसिज्जाए० इत्यादि चतुर्थं प्रतिक्रमणाध्ययनम् ४ ॥ इच्छामि ठामि काउस्सग्गं० तस्स उत्तरीकरणेणं० अन्नत्थ ऊससिएणं० सव्वलोए अरिहंतचेइआणं० पुक्खरवरदी० सिद्धाणं बुद्धाणं० वेआवच्चगराणं० इच्छामि खमासमणो अब्भुट्ठिओमि अब्भिंतरदेवसिअं खामेउं० इच्छामि खमासमणो ! पिअं च मे जं भे इत्यादि पञ्चमं कायोत्सर्गाध्ययनम् ५ ॥ उग्गए सूरे नमुक्कारसहिअं पच्चक्खामीत्यादि सर्व्वाण्यपि प्रत्याख्यानसूत्राणि षष्ठं प्रत्याख्यानाध्ययनम् ६ ॥ च, इमानि प्रतिक्रमणे षडावश्यकसूत्राणि परम्परया ज्ञेयानीति ॥ ५१ ॥

तथा—षडावश्यकमूलसूत्राणि गणधरकृतान्यन्यकृतानि वेति ? प्रश्नोऽत्रोत्तरं—षडावश्यकमूलसूत्राणि गणधरकृतानीति सम्भाव्यते, यतो

सामान्येनैवैककर्तृकत्वं दृश्यते, आवश्यक न मूलसूत्रं मूलसूत्राणि चागमः ततो गणधरकृतमित्यापन्नं, तथा सकलसिद्धान्तादिपुस्तकटिप्पासु
नन्द्यादौ 'सिद्धाण बुद्धाण' मित्यत्राद्यास्तिस्रो गाथा गणधरकृता इत्युक्तमस्ति, तथा पाक्षिकसूत्रे नमो तेसिं खमासमणाणमित्यत्र सर्व्वत्रालापके
' षडावश्यकमूलसूत्राणि सुधर्मस्वामिकृतानी ' ति लिखितमस्ति, तथा ' सामाइयमाइयाइं एक्कारसअंगाइं अहिज्जइ ' इत्याद्युक्तेश्चेति ज्ञेयम् ॥ ९२ ॥

तथा—नगरस्थितवृद्धलघुगीतार्थैः शाखापुरे शय्यातरगृहं कृतं, तत्रत्यगीतार्थैस्तद्गृहे आहारादिकं ग्राह्यं नवा ? तथा शाखापुरस्थगीतार्थै-
र्नगरमध्ये शय्यातरगृहं कृतं भवति तदा तत्रत्यगीतार्थैस्तद्गृहे आहारादिकं ग्राह्यं नवा ? तथा क्रोशद्वययावधि वृद्धगीतार्थैः शय्यातरगृहं कृतं
तत्पालनीयं नवेति ? प्रश्नोऽत्रोत्तरं—नगरस्थितगीतार्थैः शाखापुरे शय्यातरगृहं कृतं भवति तदा तद्गृहे नगरस्थगीतार्थादिभिस्तत्रस्थसाधुभिश्चा-
हारादिकं न ग्राह्यं, तथा शाखापुरस्थगीतार्थैर्नगरमध्ये शय्यातरगृहं कृतं भवति तदा तद्गृहे तत्रस्थसाधुभिः शाखापुरस्थसाधुभिश्चाहारादिकं न
ग्राह्यं, पर परस्परं तद्गृहं ज्ञापनीयं, तथा क्रोशद्वययावधि वृद्धकृतशय्यातरगृहं मुख्यवृत्त्या सर्व्वैरपि साधुभिः पालितं युज्यते, परमधुना स विधिः
सत्यापयितु न शक्यते तथापि यदा ज्ञायते तदा सत्याप्यते इति परम्पराऽस्तीति । किञ्च यत्रोषितास्ततः स्थानात् यस्यां वेलायां निर्गता
द्वितीयदिने तावत्याः वेलायाः परतोऽशय्यातरो भवतीत्यावश्यकटिप्पनके इति ज्ञेयम् ॥ ९३ ॥

तथा—मुत्कलश्राद्धः स्थापनाप्रतिलेखना करोति तदा पडिलेहणा पडिलेहावु इत्यादेशं मार्गयित्वा प्रतिलिखत्यन्यथा वेति ? प्रश्नोऽत्रोत्तरं—
मुत्कलश्राद्धः प्रतिलेखनादेशं मार्गयित्वा मुखवस्त्रिकां प्रतिलिख्य परिधानवस्त्रं परावृत्त्य च स्थापनाः प्रतिलिखति, परं पौषधसामायिकं विना पडि-
लेहणा पडिलेहावु इत्यादेशं न मार्गयतीति परम्पराऽस्तीति ॥ ९४ ॥

तथा—प्रागुद्दयोगस्य शैक्षस्य गुरुदीक्षानन्तरमुपस्थापनाया अर्वाङ् मण्डल्यामतीचारादिकं कथितं शुद्ध्यति नवेति ? **प्रश्नोऽत्रोत्तरं**—तस्य-गुरुदक्षिानन्तरमुपस्थापनाया अर्वाग् मण्डल्यामतिचारादिकं कथितं न शुद्ध्यतीति परम्पराऽस्तीति ॥ ९५ ॥

तथा—सर्व्वास्तीर्थकृन्मातरश्चतुर्दश स्वप्नान् मुखे प्रविशतः पश्यन्त्युत काश्चिदिति ? **प्रश्नोऽत्रोत्तरं**—सर्व्वास्तीर्थकृज्जनन्यश्चतुर्दश स्वप्नान् मुखे प्रविशतः पश्यन्ति, यदुक्तम्—"वृषभः कुञ्जरः सिंहः, पद्मवासाभिषेचनम् । पुष्पदाम शशी सूर्यः, पुर्णकुम्भः सितध्वजः ॥ १ ॥ पद्माकरः पयोराशिर्विमानं कल्पवासिनाम् । रत्नोच्चयः शिखी चेति, प्रविशन्तो मुखाम्बुजे ॥ २ ॥ इति **सम्यक्त्वरहस्यवृत्तौ** १४ पत्रे श्रीहेमचन्द्रसूरिकृतवीरचरित्रेऽप्येवमेव, तथाच देवानन्दया प्रविशन्तो निष्क्रामन्तश्च स्वप्ना दृष्टाः, त्रिशलया प्रविशन्त इति **हारिभद्रीयवृत्तौ**, तथा अचिरा चतुर्दश स्वप्नान् मुखे प्रविशतः पश्यतीति देवभद्रत्नाख्यशान्तिचरित्रे इति ग्रन्थानुसारेण तीर्थकृन्मातरश्चतुर्दश स्वप्नान् मुखे प्रविशतः पश्यन्तीतिभावः ॥ ९६ ॥

तथा—सिद्धाना ज्ञानदर्शनचारित्रवीर्याण्यनन्तानि प्रोक्तानि तत्कथ घटते ? तेषां पृथक् पृथगेकैकसद्भावात् तद्व्यक्त्या प्रसाद्यमिति **प्रश्नोऽत्रोत्तरं**—ज्ञानादीना चतुर्णां तदावरणकर्मपुद्गलानामनन्ताना क्षयात्तेषामप्यानन्त्यं घटत एव, यदुक्तं "ज्ञानादयस्तु भावाः प्राणमुक्तोऽपि जीवति स तैर्हि । तस्मात्तज्जीवत्वं नित्यं सर्व्वस्य जीवस्य ॥ १ ॥ अनन्तं केवलज्ञानं, ज्ञानावरणसङ्क्षयात । अनन्तं दर्शनं चापि, दर्शनावरणक्षयात् ॥ २ ॥ क्षायिके शुद्धसम्यक्त्वचारित्रे मोहनिग्रहात् । अनन्तसुखवीर्ये च, वेद्यविघ्नक्षयात् क्रमात् ॥ ३ ॥ आयुषः क्षीणभावत्वात्, सिद्धानामक्षया स्थितिः । नामगोत्रक्षयादेवाऽनन्ताऽमूर्त्ताऽवगाहना ॥ ४ ॥" इति ॥ ९७ ॥

तथौपपातिकसूत्रे 'पन्ताहारे' इत्यस्य वृत्तौ साधवः पर्युषितं वल्लचणकाद्याहारयन्तीति व्याख्यातमस्ति, तत्र पर्युषितशब्देन किमुच्यत इति

प्रश्नोऽत्रोत्तरं—प्रभातराद्धवल्लचणकादि द्विदलं मध्याह्नादिषु शीतलं नीरसं विनष्टं च भवति तत्पर्युषितशब्देनोच्यते, कोऽर्थः—शीतलं विनष्टं वल्लचणकादि पर्युषितमित्यर्थः । यदुक्तं बृहत्कल्पभाष्ये "निप्फाव चणगमाइ, अंतं पंतं च होइ वावन्नति" एतद्वृत्तौ वावन्नं विनष्टमिति व्याख्यातमस्ति । तस्मादन्ताहारादौ सर्वत्र स्वाभिनिवेशं मुक्त्वा सम्यग् विभाव्यार्थयोजना कार्येति ज्ञेयम् ॥ १८ ॥

तथा—सगरचक्रिणः षष्टिसहस्रसुताः पृथङ्मातृका एकमातृका वेति ? प्रश्नोऽत्रोत्तरं—" इतः पुनश्चतुःषष्टिसहस्रस्त्रीभिरन्वितः । रतिसागरनिर्मग्नो, नाकीवारंस्त चक्रभृत ॥ ४२ ॥ तस्यान्तःपुरसम्भोगजन्मा ग्लानिरपास्यत । स्त्रीरत्नभोगादध्वन्यश्रमोऽपाच्यनिलादिव ॥ ४३ ॥ एवं सुखं वैषयिकं, तस्यानुभवतोऽनिशम् । जह्नुप्रभृतयः षष्टिसहस्रा जज्ञिरे सुताः ॥ ४४ ॥" इति श्रीअजितनाथचरित्रानुसारेण सगरचक्रिणः षष्टिसहस्रसुताः पृथग्मातृजाता ज्ञायन्ते, भोजचरित्रे तु सगरचक्रिणा मुनिसिंहाभिधकेवली विज्ञप्तो—भगवान् ! मम सुतो भविष्यतिः, मुनिराह—एकस्मिन् समये षष्टिसहस्रा भविष्यन्ति, कथमिति कौतुकं वर्त्तते ?, मुनिराह—समुदायकर्मवशाद्, अथ रात्रौ यदा तुभ्यं चाम्रफलमेकं शासनाधिपो दास्यति, षष्टिसहस्रस्त्रीणां स्तोकं स्तोकं दातव्यं, सर्वासां पुत्रा भविष्यन्ति, तदा तथा कृतं राज्यलोभादेकया पट्टराज्या तद्भक्षितं, जलोदरीव जठरं जातं, पूर्णमासेषु प्रसवे मर्कोटकसमानाः सुता जाता घृतघुतरुतेन वर्द्धितास्तत्राद्यसुतो जह्नुनामा इत्येकमातृका अपीति एतेषामेकोदरावस्थानत्वं देवशक्त्या ज्ञायत इति ॥ १९ ॥

तथा—घटिकाद्वयमध्ये आनुपूर्व्यनानुपूर्वीभ्यां चतुर्दशपूर्वगणनलब्धिमन्तश्चतुर्दशपूर्वभृतश्चतुर्दश पूर्वाणि गणयन्ति तत् स्मरणमात्रेण वाचा वेति ? प्रश्नोऽत्रोत्तरं—चतुर्दशपूर्वधराश्चतुर्दश पूर्वाणि ताल्वोष्ठपुटसंयोगजन्यवाचा घटिकाद्वयमध्ये गणयन्ति, यदुक्तं परिशिष्टपर्वाणि

" सोऽप्युवाच महाप्राणध्यानमारब्धमस्ति यत् । साध्यं द्वादशभिर्वर्षैर्नागमिष्याम्यहं ततः ॥ ६१ ॥ महाप्राणे हि निष्पन्ने, कार्ये कस्मिंश्चिदागते । सर्व्वपूर्व्वाणि गण्यन्ते, सूत्रार्थाभ्यां मुहूर्त्ततः ॥ ६२ ॥" इति, इयमपि लब्धिः केषाञ्चित् न सर्व्वेषां पूर्व्वविदामित्यपि ज्ञेयमिति ॥ ६० ॥

तथा—अप्रासुकोदकमोदकादिकं सचित्तविकृतिमध्ये गण्यते द्रव्यमध्ये वेति प्रश्नोऽत्रोत्तरं– श्राद्धविधौ सचित्तविकृतिवर्ज्जं यन्मुखे क्षिप्यते तद्द्रव्यमध्ये गण्यते इति वचनात्प्रासुकनीरोष्णोदकतन्दुलधावनोदकादीनां सचित्तत्वाभावाद्द्रव्यमध्ये गणनं मुद्गमोदकभेषजलड्डकनिर्विकृत-घृतादिनां विकृतित्वाभावाद् द्रव्यमध्ये गणनं च क्रियते, तथैकस्मिन्नपि द्रव्ये पोलिका क्षोभितपोलिका लहचूई सप्तपुटिका गडदादिभेदेन भिन्ननाम-रसस्वादवत्वात् पृथक् पृथक् द्रव्यमध्ये गण्यते, अप्रासुकजलमोदकादिकं तु सचित्तविकृतिमध्ये गण्यते, अधुना केचन द्रव्यमध्येऽपि गणयन्तो दृश्यन्ते, किञ्च रूप्यादिधातुशिलाकादिमुखे क्षिप्यते तद्द्रव्यमध्ये न गण्यते, रसास्वादाभावात् ॥ ६१ ॥

तथा—लोका जिनकल्पिनं नग्नं पश्यन्ति नवेति ? प्रश्नोऽत्रोत्तरं--लोकास्तं नग्नं पश्यन्ति,यतः शास्त्रे लज्जाजेता जिनकल्पमङ्गीकरोतीति ॥६२॥

तथा—औषधरसाङ्गमध्ये क्षिप्तं वत्सनागादिकमभक्ष्यं भवति नवेति प्रश्नोऽत्रोत्तरं–औषधादिमध्ये क्षिप्तं वत्सनागभाङ्गिपोस्ताहिफेनादिक-मौषधनिमित्तं गृहीतुमभक्ष्यं न भवति परं कन्दर्पार्थं गृहीतं त्वभक्ष्यं भवतीति ॥ ६३ ॥

तथा—सार्द्धद्वीपद्वये जघन्योत्कृष्टत एकस्मिन् समये तीर्थकृतां कत्यभिषेकाः तथा तत्र कत्यरका भवन्तीति प्रश्नोऽत्रोत्तरं–सार्द्धद्वीपद्वये जघन्यत एकसमये दश तीर्थङ्करा मेरुपञ्चके शक्रैरभिषिच्यन्ते उत्कृष्टतस्तु विंशतिः, तथा तत्र जघन्यतश्चत्वारोऽरका उत्कृष्टतस्तु पञ्च भवन्तीति ज्ञायते ॥ ६४ ॥

तथा—चक्रवर्त्तिनो मागधादौ कत्यष्टमान् कुर्वन्तीति ? प्रश्नोऽत्रोत्तरं—मागधस्तूप १ वरदामस्तूप २ प्रभासस्तूप ३ वैताढ्यदेवसाधन ४ तिमिस्रादेवसाधन ५ नमिविनमिदेवसाधन ६ सिंधुदेवीसाधन ७ चुल्लहिमवत्साधन ८ गङ्गादेवीसाधन ९ नवनिधानप्रकटीकरणा १० योध्यानगरीप्रवेशकरणार्थं ११ चक्रिणोऽनुक्रमेणैकादशाष्टमान् कुर्वन्तीति जम्बूद्वीपप्रज्ञप्तिसूत्रे, तीर्थकृच्चक्रिणोऽष्टमान्न कुर्वन्तीत्यपि शान्तिचरित्रेऽस्तीति ज्ञेयम् ॥ ६५ ॥

तथा—चक्रित्वं प्राप्य पुनश्चक्रित्वं कियता कालेन प्राप्यत इति ? प्रश्नोऽत्रोत्तरं—जघन्यतः साधिकसागरेणोत्कृष्टतोऽनन्तकालेन तत् प्राप्यते इति भगवती ११ शतके ॥ ६६ ॥

तथा—कश्चित्पञ्चेन्द्रियजीवं हन्यमानं गोचरयति तदभयदानमनुकम्पादानं वा कथ्यत इति प्रश्नोऽत्रोत्तरं—तदभयदानं कथ्यते, यतः श्रीशान्तिनाथजीवेन पूर्वभवे पारापतो मोचितस्तदभयदानं पुष्पमालावृत्तौ कथितमस्तीति ॥ ६७ ॥

तथा—उपधानवाहिना तपोदिने कल्याणकतिथिराराधिता तत्र तेनैव तपसा सरति नवेति ? प्रश्नोऽत्रोत्तरं—बहुतपस्त्वात्तेन तपसा सरतीति ज्ञायते, अन्यथा चतुर्दश्यादिष्वेकाशनकं कृत्वाऽग्रेतना कल्याणकतिथिराराध्यत इति ॥ ६८ ॥

तथा—नारदाः सर्वेऽपि मोक्षं एव यान्ति स्वर्गं वेति ? प्रश्नोऽत्रोत्तरं—नारदा मोक्षं स्वर्गं च यान्तीति ऋषिमण्डलवृत्तौ, किञ्च—ते पूर्वं मिथ्यात्विनः पश्चात्सम्यक्त्वभाजस्तत्रैवोक्ता इति, अन्यच्च भीम १ महाभीम २ रुद्र ३ महारुद्र ४ काल ५ महाकाल ६ चतुर्मुख, ७ नवमुख ८—उन्मुखा ९ एवंविधनामान्यपि सन्तीति ॥ ६९ ॥

तथा—सिन्धुदेशे श्रीवीरस्वामिगमने पञ्चशताधिकसहस्रसाधुभिरनशनं कृतं तदक्षराणि प्रसाद्यानीति ? प्रश्नोऽत्रोत्तरं–तदक्षराणि निशीथचूर्णौ सन्ति, तथा श्रूयते च अप्कायमचित्तं जानाना अपि केवलमनःपर्यायावधिश्रुतज्ञानिनो न परिभुञ्जते, अनवस्थाप्रसङ्गभीरुतया, तथा श्रीवर्द्धमानस्वामिना विमलसलिलशैवलपटलत्रसादिरहितो महाद्रहो व्यपगताशेषजलजन्तुकोऽचित्तवारिपरिपूर्णः स्वशिष्याणा तृड्बाधितानामपि पानाय नानुजज्ञे, तथा अचिततिलशकटस्थण्डिलपरिभोगानुज्ञा चानवस्थादोषसंरक्षणाय भगवता न कृतेति, श्रुतज्ञानप्रामाण्यज्ञापनार्थं च, इत्याचाराङ्गप्रथमाध्ययनतृतीयोद्देशकवृत्ताविति ॥ ७० ॥

तथा—अन्धकारे आहारकरणे रात्रिभोजनदोषो लगति नवेति ? प्रश्नोऽत्रोत्तरं–जे चेव रयणिभोयणदोसा ते चेव संकडमुहंमि । जे च्चेव संकडमुहे, ते दोसा अंधयारंमि ॥ १ ॥ इत्योघनिर्युक्तिवचनात् रात्रिभोजनदोषो लगतीति ज्ञायते ॥ ७१ ॥

तथा—ब्राह्मीसुन्दरीभ्यां पाणिग्रहणं कृतं नवा ? केचन कथयन्ति–भरतेन सुन्दरी बाहुबलिना ब्राह्मी परिणीता, तर्हि बाहुबलेर्वर्षकायोत्सर्गान्ते ताभ्यां भ्रातर्गजादुत्तरेत्युक्तं तत्कथमिति ? प्रश्नोऽत्रोत्तरं–भरतबाहुबलिभ्यां विपरीततया पाणिग्रहणं कृतमित्यक्षराणि आवश्यकमलयगिरिवृत्तौ सन्ति, यत्तु ताभ्यां भ्रातर्गजादुत्तरेत्युक्तं तत्प्राक्तनभ्रातृसम्बन्धात् द्वाभ्यां समुदिताभ्यां कथनात् यतितया च युक्तिमदेवेति ॥ ७२ ॥

तथा—तेजोलेश्यायाः पुद्गलाः सचित्ता अचित्ता वेति प्रश्नोऽत्रोत्तरं–लब्धिः पुद्गलरूपा न भवति, शक्तिरूपा भवति, परं तेजोलेश्यापुद्गला जीवेन मुखाज्जीवप्रदेशसहिता निष्कासितास्तस्माज्जीवप्रयोगनिष्काशितत्वात् सचित्ता ज्ञायन्ते इति ॥ ७३ ॥

तथा—देशविरतिसम्यक्त्वधारिणौ द्वादशदेवलोके यातो नवेति ? प्रश्नोऽत्रोत्तरं–तौ द्वावप्युत्कृष्टतो द्वादशदेवलोके यात इत्यक्षराणि पन्नवणासूत्रे वृत्तौ च सन्तीति ॥ ७४ ॥

तथा—सम्यक्त्वप्राप्त्यनन्तरं कियता कालेन देशचारित्रं सर्वचारित्रं वा लभ्यते इति ?. प्रश्नोऽत्रोत्तरं—पल्योपमपृथक्त्वेन देशचारित्रं सङ्ख्यातसागरोपमप्रमाणेन सर्वचारित्रं न लभ्यते, इति प्रवचनसारोद्धारवृत्ताविति ॥ ७५ ॥

तथा—दधि गृहस्थैरोदनादिना संसृष्टं तद्दिने प्रहरानन्तरं निर्विकृतिकं भवति, तथा दुग्धमपि राद्धकूरपृथुकादिना संसृष्टं निर्विकृतिकं भवति नवेति ? प्रश्नोऽत्रोत्तरं—कूरमिश्रं दधि करम्बरूपं जायते, तद् घटिकाद्वयादनु निर्विकृतिकं भवति, यच्च दधि दुग्धं वा 'दुद्धदहि चउरङ्गुले' त्यनुसारेण कूरादिमिश्रं विधीयते तद्भाष्यावचूरिवचनात्पर्युषितं सत् निर्विकृतिकं भवतीति ॥ ७६ ॥

तथा—महागिरिसुहस्तिनौ केन कारणेनार्योपपदौ जाताविति ? प्रश्नोऽत्रोत्तरं—"स्वामिना स्थूलभद्रेण, शिष्यौ द्वावपि दीक्षितौ । आर्य-महागिरिरार्यसुहस्ती चाभिधानतः ॥ १ ॥ तौ हि यक्षार्यया बाल्यादपि मात्रेव पालितौ । इत्यार्योपपदौ जातौ, महागिरिसुहस्तिनौ ॥ २ ॥" इति परिशिष्टपर्वण्युक्तमस्तीति ॥ ७७ ॥

तथा—पञ्चदशकर्मादाननिषेधवता धान्यनालिकेरादिफलगुलीहरितालपशूनां विक्रये भङ्गोऽभङ्गो वा ? तथा—सद्दालपुत्रादीनां श्राद्धानां कर्मादानस्य सम्भवो निषेधो वेति ? प्रश्नोऽत्रोत्तरं—धान्यादीनां कृतपरिमाणादूर्ध्वं क्रयादिकरणे भङ्गोऽन्यथा तु नेति, तथा सद्दालपुत्रादीनां परिमितत्वादङ्गालादिकर्मकरणेऽपि न कर्मादानसंज्ञेति वृद्धोक्तिः ॥ ७८ ॥

तथा—उपवासी श्राद्धः सन्ध्यायां सामायिकं विधाय मुखवस्त्रिकां प्रतिलिख्य प्रत्याख्यानं करोत्यन्यथा वा ?, यदि तथैव तदा वन्दनकदाननिषेधः कस्मादिति, प्रश्नोऽत्रोत्तरं—सामाचारीप्रमुखग्रन्थेषु भोजनदिवसे वन्दनकदानानन्तरं प्रत्याख्यानकरणाक्षराणि सन्ति, परमुपवासदिने

वन्दनकदानानन्तरं प्रत्याख्यानकरणविधिर्नास्ति, मुखपोतिका तु प्रतिलेखिता युज्यते, यस्मात्तां विना प्रत्याख्यानं न शुद्ध्यतीति सामाचार्यस्ति, तथोपधानेऽपि तथैव करणादिति ॥ ७९ ॥

तथा—प्रतिवासुदेवमाता कति स्वप्नान्पश्यतीति ? प्रश्नोऽत्रोत्तरं–सा त्रीन् स्वप्नान् पश्यतीति, यदुक्तं श्रीअजितसिंहसूरिकृतशान्तिचारित्रे षष्ठप्रस्तावे–" प्रत्यर्द्धचक्रिणां त्रींश्चान्येषामुत्तमजन्मिनाम् । एकैकमम्बिकाः स्वप्नं, पश्यन्त्येषां हि मध्यतः ॥ १९ ॥ " इति, तथा सप्ततिशतस्थानकेऽपि, किं च–स तान् गज १ कुम्भ २ वृषभा ३ ख्यान् पश्यतीति परम्परया ज्ञेयम् ॥ ८० ॥

तथा—स्वयम्बुद्धाः प्रत्येकबुद्धाश्च नग्ना अनग्ना वेति ? प्रश्नोऽत्रोत्तरं–स्वयम्बुद्धानां पात्रादिर्द्वादशविध उपधिस्तद्यथा–"पत्तं १ पत्ताबंधो २ पायट्ठवणं च ३ पायकेसरिया ४ । पडलाइँ ५ रयत्ताणं ६, गुच्छओ ७ पायनिज्जोगो ॥ १ ॥ तिन्नेव य पच्छागा १० रयहरणं चेव ११ होइ मुहपंत्ती १२ " इति, प्रत्येकबुद्धानां तु जघन्येन रजोहरणमुहपत्तिरूपो द्विविधः, उत्कृष्टतस्तु चोलपट्टक १ मात्रक २ कल्पत्रिकवर्जो ९ नवविध इति पाक्षिकसूत्रबृहद्वृत्तौ, एतदनुसारेण स्वयम्बुद्धाः प्रत्येकबुद्धाश्च चोलपट्टाभावेन सप्रावरणा अपि नग्ना एव ज्ञायन्ते इति ॥ ८१ ॥

तथा—प्रथमाङ्गस्याष्टादशसहस्रपदानि सन्ति, तत्रैकपदप्रमाणं किमिति प्रश्नोऽत्रोत्तरं–" पढमं आयारंगं, अट्ठारसपयसहस्सपरिमाणं । एवं सेसंगाविहु, दुगुणादुगुणप्पमाणाइं ॥ १ ॥ " एवमेकादशाङ्गानां त्रिकोटीसप्त ( अष्ट ) पष्टिलक्ष ( षट् ) चत्वारिंशत्सहस्रपदानि भवन्ति, तत्रैकपदस्य ५१०८८६८४० एतावन्तः श्लोका अष्टाविंशत्यक्षराणि च भवन्तीत्यनुयोगद्वार ( कर्मग्रन्थ ) वृत्ताविति ॥ ८२ ॥

१० तथा—सुपार्श्वनाथस्यैका पञ्च नव च फणाः क्रियन्ते तत्कथमिति प्रश्नोऽत्रोत्तरं–" जेणेगपंचनवसिरासु नागसिज्जासु तिसुवि पत्तेयं । जणणी सुमिणे पिच्छइ, गब्भत्थस्सावि सामिस्स ॥ १ ॥ ० तेणेगाइफणा नेया । सुपार्श्वफणपञ्चककृताविदमपि कारणं पूर्वाचार्या [ एवं ] वदन्ति–

भगवतः छद्मस्थावस्थाया कायोत्सर्गस्थस्योपरि 'सवर्त्तकपक्षिपरिहाराय वन्दनागतधरणेन्द्रेण वैक्रियपञ्चाङ्गुलकरो धृत इति, अत्रार्थे वसुदेवहिंण्डि-द्वितीयखण्डोऽवलोकनीयः, कथावलीप्रथमखण्डेऽप्युक्तं 'नवफणरयणाहरणेहिं तेहिं समोसरणे सक्केण विउव्विज्जइ तिविहंपि सुपाससीसाइं,' "इग पण नव य सुपासो, पासो फण तिन्नसगइगार कमा। फणिसिज्जासुविणाओ, फणिंदभत्तीए नन्नेसु" ॥ १ ॥ इति वचनात् सुपार्श्वपार्श्वनाथयोः फणकृतिर्ज्ञेयेति ॥ ८३ ॥

तथा—'नवण्हं मासाणं बहुपडिपुन्नाण अद्धट्ठमाणराइंदियाण' मित्यत्र नव मासाः सप्त रात्रय एव भवन्ति, यतो यस्य मध्यरात्रावुत्पत्तिः तस्य मध्यरात्रावेव च जन्म तर्हि कथं सार्धाः सप्त रात्रयः प्रोक्ता इति ? प्रश्नोऽत्रोत्तरं—भगवज्जन्मनि नव मासाः सप्त रात्रय एव भवन्ति, परं सिद्धांतशैलीवशात् 'अद्धट्ठमाणराइंदियाण' मिति पाठो ज्ञायत इति ॥ ८४ ॥

तथा—केवलिना कति परीषहा भवन्तीति ? प्रश्नोऽत्रोत्तरम्—केवलिना क्षुधा १ तृषा २ शीतो ३ ष्ण ४ दंश ५ चर्या ६ शय्या ७ वध ८ रोग ९ तृणस्पर्श १० मल ११ रूपैकादश परीषहा भवन्तीति भगवत्यष्टमशतके नवमोद्देशके इति ॥ ८५ ॥

तथा—अनुत्तरविमानेषु जीवः कति भवान् करोतीति ? प्रश्नोऽत्रोत्तरम्—विजयादिषु उत्कर्षतो वारद्वयं, सर्वार्थसिद्धिविमाने एकवारं इति जीवाभिगमवृत्तौ, 'विजयादिषु द्विचरमा' इति तत्त्वार्थसूत्रचतुर्थाध्याये, सर्वार्थसिद्धिविमानादागतोऽनन्तरभवे सिद्ध्यत्येव, विजयादिचतुर्षु गतो मनुष्येष्वेऽऽवायाति, तत्रापि जघन्येन एकं द्वौ वा भवौ उत्कर्षतश्चतुर्विंशतिभवान्, तत्र नरभवेऽष्टौ देवभवेऽष्टौ भूयो नरभवेऽष्टौ ततः सिद्ध्यत्येव, विजयादिषु द्विरुत्पन्नस्य नियमात् सिद्धिरनन्तरभव एवेति प्रघोषः, प्रज्ञापनायां संख्यातभवानिति ॥ ८६ ॥

तथा—विष्णुकुमार एको द्वौ वेति ? प्रश्नोऽत्रोत्तरम्—वासुपूज्यतीर्थे नमुचिकृतोपद्रववारकः प्रथमो, द्वितीयः श्रीशान्तिनाथतीर्थेऽभूदित्यष्टाविंशत्युत्तराध्ययनचतुर्दशसहस्रीवृत्तौ ज्ञेयम् ॥ ८७ ॥

तथा—श्रीह्रीप्रभृतिषड्देव्यश्चतुर्विंशतिजिनयक्षिण्यः षट्पञ्चाशद्दिक्कुमार्यः सरस्वती श्रुतदेवी शासनदेवी चेत्येतासां मध्ये का भवनपतिनिकायवासिन्यः काश्च व्यन्तरनिकायवासिन्य इति साक्षरं व्यक्त्या प्रसाद्यमिति, प्रश्नोऽत्रोत्तरम्—श्रीह्रीप्रभृति षड् देव्यो भवनपतिनिकायान्तर्गता इति मलयगिरिकृतबृहत्क्षेत्रविचारटीकायामिति, तथा चतुर्विंशतिजिनयक्षिण्यस्तु व्यन्तरनिकायान्तर्गता एव सम्भाव्यन्ते, यत उक्तं संग्रहणीसूत्रे-'वतरं पुण अट्ठविहा पिसायभूआ तहा जक्खे' त्यादि ॥ तथा षट्पञ्चाशद्दिक्कुमार्यस्तु श्रीआवश्यकचूर्णौ षट्पञ्चाशद्दिक्कुमारीणां ऋद्धिवर्णने 'बहूहिं वाणमंतरेहिं देवेहिं देवीहिंय सद्धिं संपरिवुडा' इत्याद्युक्तानुसारेण व्यन्तरनिकायान्तर्गता ज्ञायन्त इति। तथा शासनदेवी तु जिनयक्षिण्येव नापरेति, तथा सरस्वती श्रुतदेवी तु पर्यायान्तरमिति ज्ञायते परं कुत्रापि तदायुर्माननिकाया न दृश्यन्त इति ॥ ८८ ॥

तथा—"सुत्ते अत्थे भोअण, काले आवस्सए अ सज्झाए। संथारएवि अ तहा, सत्तेया हुंति मंडलिओ" ॥ १ ॥ एतद्गाथोक्तसप्तमण्डलीसत्यापनस्थानकानि कानि भवन्तीति ? प्रश्नोऽत्रोत्तरं—प्रातः स्वाध्यायकरणं सूत्रमण्डली, व्याख्यानमर्थपौरुषी चार्थमण्डली २ भोजनमण्डली प्रतीता ३ कालप्रवेदनं कालमण्डली ४ उभयकालप्रतिक्रमणमावश्यकमण्डली ५ स्वाध्यायप्रस्थापनं स्वाध्यायमण्डली ६ संस्तारकविधिभणनं संस्तारकमण्डली च ज्ञायते ७, किञ्च तृतीयप्रहरप्रतिलेखनादेशमार्गणमण्डली प्रश्नोत्तरसमुच्चयवचनादावश्यकमण्डल्यन्तर्भूतेति बोध्यम् ॥ ८९ ॥

तथा—वीरनिर्वाणात् १९२ वर्षे "जीअं काऊण पणं, तुरुमिणिदत्तस्स कालिअज्जेण। अवि अ सरीरं चत्तं, न य भणिअमहम्मसंजुत्तं" ॥ १ ॥ एतद्गाथोपदर्शितचरित्रः कालिकाचार्यः प्रथमः, वीरात् ३३५ वर्षे पढमाणुओग कासी० इति ऋषिमण्डलसूत्रानुसारेण प्रथमानुयोगकर्त्ता द्वितीयः,

वीरात् ४५३ वर्षे गर्दभिल्लोच्छेदी तृतीयः, वीरात् ५८४ वर्षे आर्यरक्षितसूरिः शक्रपृष्टनिगोदविचारव्याख्याता शक्रदत्तनामा कालिकाचार्यः चतुर्थः, प्राकृतदीपालिकाकल्प १ संस्कृतकालिकाचार्यकथा २ श्राद्धविधिविनिश्चय ३ श्राद्धविधि ४ विचारामृतसंग्रह ५ भरहेसरबाहुबलीवृत्ति ६-प्रमुखग्रन्थानुसारेण वीरात् ९९३ वर्षे पञ्चमीतः चतुर्थ्यां पर्युषणापर्व्वाऽऽनेता पञ्चम इत्येतत्कालिकाचार्यपञ्चकं सत्यमसत्यं वेति ? **प्रश्नोऽत्रोत्तरम्**—भवल्लिखितकालिकाचार्यपञ्चकं सत्यमिव प्रतिभाति परं तद्ग्रन्थावलोकने सत्येव निर्णयो ज्ञापयिष्यत इति ॥ ९० ॥

तथा—साध्वीनां कालिकयोगक्रियाया श्रावकदत्तानि वन्दनकानि शुद्ध्यन्ति नवेति ? **प्रश्नोऽत्रोत्तरं**—साध्वीनां कालिकयोगक्रियायां श्राद्धदत्तानि वन्दनकानि शुद्ध्यन्तीति वृद्धाः ॥ ९१ ॥

तथा—षोडशप्रहरानन्तरं दध्यऽभक्ष्यं स्यात् द्वादशप्रहरानन्तरं वेति व्यक्त्या प्रसाद्यमिति ? **प्रश्नोऽत्रोत्तरं**—"आमगोरससंपृक्तं द्विदलं पुष्पितौदनं । दध्यहर्द्वितयातीतं, क्वथितान्नं च वर्जयेत्—" ॥ १ ॥ इति **योगशास्त्र**तृतीयप्रकाशे, एतद्व्याख्यालेशो यथा—इह हि इयं स्थितिः—केचिद्भावा हेतुगम्याः केचित्त्वागमगम्यास्तत्र ये यथा हेत्वादिगम्याः ते तथैव प्रवचनधरैः प्रतिपादनीयाः, आगमगम्येषु हेतून् हेतुगम्येषु त्वागममात्रं प्रतिपादयन् आज्ञाविराधकः स्यादित्यामगोरससंपृक्तद्विदलादौ न हेतुगम्यो जीवसद्भावः किन्त्वागमगम्य एव, तथाहि—आमगोरससम्पृक्ते द्विदले आदिशब्दात् पुष्पितौदने अहर्द्वितयाऽतीते च दध्नि क्वथितान्ने च ये जंतवस्ते केवलज्ञानिभिर्दृष्टा इत्यामगोरसमिश्रद्विदलादिभोजनं वर्जयेदिति, तद्भोजनाद्धि प्राणातिपातलक्षणो दोषः स्यादिति । अहर्द्वितयातीतमिति कोऽर्थो—दिनद्वयाऽतिक्रमेऽभक्ष्य, दिवसग्रहणे रात्रिग्रहणं समागतमेव यथा—त्रिंशद्दिनैर्मासः पञ्चदशादिनैः पक्ष इत्यर्थः, एतावता रात्रिद्वयातिक्रमे द्वादशादिप्रहरातिक्रान्तं दध्यभक्ष्यम् । यदा प्रथमदिवसे प्रभाते मेलितं तदा षोडशप्रहरानन्तरमप्यभक्ष्यं भवति परं षोडशप्रहरनियमो नेति सम्भाव्यते, यतः पूर्वदिने सन्ध्यायां मेलितं द्वादशप्रहरानन्तरमप्यभक्ष्यं भवति इति ॥९२॥

**तथा**—कृतगृहसत्कप्रत्याख्यानः श्राद्धो गृहे गत्वाऽन्यत्र भोजनं करोति तदा शुद्धयति । किं वा तत्र दन्तधावनं विधायेति ? **प्रश्नोऽत्रोत्तरं**—कृतगृहसत्कप्रत्याख्यानः श्रावको गृहे गत्वा पारितगृहसत्कप्रत्याख्यानो दन्तधावनकरणमन्तराप्यन्यत्र भुङ्क्ते तदा शुद्धयतीति वृद्धाः ॥ ९३ ॥

**तथा**—चक्षुर्विकलस्य साधोः पार्श्वे कालिकोत्कालिकयोगस्य क्रिया कृता शुद्धयति नवेति ? **प्रश्नोऽत्रोत्तरं**—कालिकोत्कालिकयोगक्रिया चक्षुर्विकलस्य साधोः पार्श्वे प्रायो न शुद्धयतीति ज्ञातमस्ति ॥ ९४ ॥

**तथा**—'**बारस मुहुत्त गब्भे,' 'इअरे चउवीस विरह उक्कोसो'** एतद्विरहकालः संमूर्च्छजमनुष्याणां कियता कालेन भवतीति **प्रश्नोऽत्रोत्तरम्**—इह मनुष्या द्विविधाः—सम्मूर्च्छजाः गर्भजाश्च, तत्राद्याः कदाचिन्न भवन्त्येव, जघन्यतः समयस्योत्कृष्टतस्तु चतुर्विंशतिमुहूर्त्तान्तरकालस्य प्रतिपादितत्वात्, उत्पन्नानां तु जघन्यत उत्कृष्टतश्चान्तर्मुहूर्त्तस्थितिकत्वेन परतः सर्व्वेषां निर्लेपकत्वसम्भवात्, यदा तु भवन्ति तदा जघन्यत एको द्वौ त्रयो वा, उत्कृष्टतस्तु असङ्ख्याताः, इतरे तु संख्येया भवन्तीत्य**नुयोगद्वारवृत्तौ** । त्रसत्वं—त्रसत्वेनोत्पत्तिः, सततमनवरतं, जघन्यत एकं समयमुत्कर्षत आवलिकाऽसङ्ख्येयभागं कालं, परतोऽवश्यमन्तरम् । अपि चास्तां सामान्येन त्रसत्वम्, किन्तु द्वीन्द्रियास्त्रीन्द्रियाश्चतुरिन्द्रियास्तिर्यक्पञ्चेन्द्रियाः सम्मूर्छजमनुष्याः अप्रतिष्ठाननरकावासनारकवर्ज्जाः शेषाः प्रत्येकं नारका अनुत्तरसुरवर्ज्जाः शेषाः प्रत्येकं देवाश्च निरन्तरमुत्पद्यमाना जघन्यत एकं समयमुत्कृष्टत आवलिकाया असङ्ख्येयभागं कालं इति **पंचसंग्रहवृत्तौ** ४९ पत्रे, एतदक्षरानुसारेणोत्कृष्टतः कदाचिदावलिकाया असंख्येयभागकालानन्तरं सम्मूर्छजमनुष्याणां चतुर्विंशतिमुहूर्त्तविरहकालः सम्भवतीति ॥ ९५ ॥

**तथा**—एकेन केनचिच्चारित्रब्रह्मचर्यादिव्रतं गृहीतं, पश्चात्कर्मवशाद्भग्नम्, अपरेण तु तद्भङ्गभयादेव न गृहीतं, तयोर्मध्ये को गुरुः कश्च लघुरिति साक्षरं प्रसाद्यमिति **प्रश्नोऽत्रोत्तरम्**—येन व्रतग्रहणवेलायां शुभाध्यवसायेन यत्कर्मार्जितं बोधिलाभस्वर्गायुर्बन्धादि तदर्ज्जितमेव, **गौतमप्रतिबोधित**

हालिकवत्, कर्म्मवशाच्च तद्भङ्गेऽपि निन्दागर्हादिना नन्दिषेणादिवत् शुद्धोऽपि स्यात्, तदपेक्षया स लघुकर्म्मा । येन तु तद्भङ्गभयादेव न गृहीतं स गुरुकर्म्मा, तद्ग्रहणलाभाभावादिति । अन्यथा तु " वयभङ्गे गुरुदोसो, थेवस्सवि पालणा गुणकरी उ । गुरुलाघवं च नेअं, धम्मंमि अओ अ आगारा ॥ १ ॥ इत्यपि प्रत्याख्यानपञ्चाशके प्रोक्तमस्तीति ॥ ९६ ॥

तथा—दध्ना पर्युषितौदनमेकीकृत्य करम्बको विहितः, स तृतीयदिने यतीना कल्पते नवेति प्रश्नोऽत्रोत्तरम्—दध्ना तक्रेण च द्वितीयदिनौदनो द्वितीयदिने तृतीयदिने वा करम्बको विहितः स तृतीयदिने साधूनां विहर्त्तुं कल्पते इति परम्पराऽस्तीति ॥ ९७ ॥

तथा—उपधानवाहिना परिपूर्णप्रवेदनक्रियाकरणानन्तरं मुखवस्त्रिकाप्रतिलेखनं विनाऽऽलोचनादिकं शुद्ध्यति नवेति ? प्रश्नोऽत्रोत्तरम्—उपधानवाहिना परिपूर्णप्रवेदनक्रियाकरणानन्तरं मुखवस्त्रिकाप्रतिलेखनं विनाऽपि आलोचनं क्षामणकं च क्रियमाणं परमगुरूणा पार्श्वे दृष्टमस्ति, सम्प्रत्यपि च कार्यमाणमस्तीति ॥ ९८ ॥

तथा—श्राद्धादिना जपमालादिकं साधुवन्नमस्कारद्वयेन त्रयेण वा स्थाप्यते इति प्रश्नोऽत्रोत्तरम्—श्राद्धैर्जपमालादिकं नमस्कारत्रयेण स्थाप्यते इत्यविच्छिन्नपरम्पराऽस्ति, परमुत्थापनमुभयोरप्येकेनैव नमस्कारेणेति बोध्यम् ॥ ९९ ॥

तथा—जीवानामिन्द्रत्वप्राप्तिः सकृदनेकशो वेति प्रश्नोऽत्रोत्तरं—इन्द्रत्वं चाक्रित्वं चानेकशः प्राप्नोति जीवो, यतः—" देविंदचक्कवट्टित्तणाइं मुत्तूण तित्थयरभावं । अणगारभाविआवि अ, सेसा य अणंतसो पत्ता ॥ १ ॥ ' एषा गाथा प्रत्याख्यानप्रकीर्णके ६१ देवेन्द्रत्वं चक्रवर्तित्वादिकं च मुक्त्वा शेषा भावा अनन्तशः प्राप्ताः, देवेन्द्रत्वं चक्रवर्त्तित्वं तु अनेकशः प्राप्यते, न त्वनन्तश इति भावार्थः ।

तथा—देविंदचक्कवट्टित्तणाइं रज्जाइं उत्तमा भोगा। पत्ता अणंतखुत्तो, नयऽहं तत्तिं गओ तेहिं ॥ १ ॥' एषा मरणसमाधिप्रकीर्णके महाप्रत्याख्यान प्रकीर्णके च, अत्रापि अनन्तकृत्व इति अनन्तशब्दोऽनेकपर्यायो ज्ञेयः। एभिरक्षरैरिन्द्रत्वमनेकशः प्राप्यते भव्यैरिति ॥ १०० ॥

तथा—जीवप्रदेशादाकाशप्रदेशस्तुल्यो वाऽधिको वा हीनो वेति ? प्रश्नोऽत्रोत्तरं—जीवप्रदेशाकाशप्रदेशयोर्निर्विभागभागरूपत्वेन तुल्यत्वमेवेति मन्तव्यम् ॥ १०१ ॥

तथा—कश्चित्साधुरन्तर्मुहूर्त्तमानाभ्या पष्ठसप्तगुणस्थानकाभ्यामुत्कर्षतो देशोनपूर्व्वकोटिं यावत्तिष्ठतीति तयोरन्तर्मुहूर्त्तं समानं न्यूनाधिकं वेति प्रश्नोऽत्रोत्तरं—पष्ठगुणस्थानस्यान्तर्मुहूर्त्तं महत् सप्तमस्य च लघ्विति भगवतीसूत्रतृतीयशतके, तत्रैव मतान्तरेण द्वे[1] अपि प्रत्येकं पूर्व्वकोटिमाने प्रोक्ते स्त इत्यपि ज्ञेयम् ॥ १०२ ॥

तथा—तीर्थकृज्जननी चतुर्दश स्वप्नान् स्फुटान् पश्यति, चक्रवर्त्तिजननी त्वस्फुटानित्यक्षराणि सन्ति प्रघोषो वेति ? प्रश्नोऽत्रोत्तरं—चक्रवर्तिमाता अस्फुटान् पश्यति, तदुक्तं—"चतुर्दशाप्यमून् स्वप्नान्, या पश्येत् किञ्चिदस्फुटान्। सा प्रभो प्रमदा सूते, नन्दनं चक्रवर्तिनम्" ॥ १ ॥ इति वासुपूज्यचरित्रे ॥ १०३ ॥

तथा—स्फटिकादिपृथ्वी सचित्ताऽचित्ता वेति ? प्रश्नोऽत्रोत्तरं—स्फटिकादिपृथ्वी सचित्ता 'फलिहमणिरयणविद्रुम' इति वचनात्, रत्नान्यचित्तानि भवन्ति, सुवण्णरयणमाणिमुत्तियसंखसिलप्पवालरत्तरयणाणि अचित्ताणि' इत्यनुयोगद्वारसूत्रप्रान्तवचनादिति ॥ १०४ ॥

---

१ सामान्येन प्रमत्ताप्रमत्तत्वे, तेन केवलित्वकालोऽप्यप्रमत्तत्वे।

तथा—नव नारदाः कस्मिन् वारके सञ्जाता इति साक्षर प्रसाद्यामिति **प्रश्नोऽत्रोत्तरं**—नव नारदाः वासुदेवसमानकालीनाः सम्भाव्यन्ते, तत्तच्चरित्रादिषु तद्वारके तेषा गमनागमनादिश्रवणादिति ॥ १०५ ॥

तथा—शान्तिनाथजनन्या द्विश्चतुर्दश स्वप्ना दृष्टा उतैकवारामिति **प्रश्नोऽत्रोत्तरं**—शान्तिनाथजनन्या द्विश्चतुर्दश स्वप्ना दृष्टा, यदुक्तं शत्रुञ्जयमाहात्म्येऽष्टमपर्वणि " द्विःस्वप्नदर्शनादर्हच्चक्रिजन्मसुनिश्चया । रत्नगर्भेव सा गर्भं, बभार शुभदोहदा ॥ १६ ॥ " इति, एवमन्यत्रापीति ॥ १०६ ॥

तथा—तपःकरणाशक्तस्य श्राद्धस्य आलोचनाप्रायश्चित्तद्रव्यं क्व व्यापार्यते जिनालयेऽन्यत्र वा तत्कियद्दीयत इति **प्रश्नोऽत्रोत्तरं**—आलोचनाप्रायश्चित्तविषये द्रव्यमोचनं तु तपःसामर्थ्याऽभावे आलोचनाऽऽदातुः सम्पत्त्यनुसारेण दीयते नत्वियत्तान्वितं, तद्द्रव्यं चामारिजिनमन्दिरचित्कोशादिषु यथावसरमुपयुज्यते इति ॥ १०७ ॥

तथा—श्रावको वन्दनकानि ददत् मुखवस्त्रिकया गुरुपादं प्रमार्जयति तदाऽऽशातना लगति न वेति **प्रश्नोऽत्रोत्तरं**—मुखवस्त्रिकया गुरुपादप्रमार्ज्जने आशातना ज्ञाता नास्ति, प्रत्युत तत्प्रमार्ज्जनं युज्यते, यथा शिष्या गुरुपादौ रजोहरेण प्रमार्ज्जयन्ति तद्वदिदमपि ज्ञेयमिति ॥ १०८ ॥

तथा—छक्किोपधानवहनानन्तरं षण्मासमध्ये मालापरिधानं शुद्ध्यति किं वा षण्मासानन्तरामिति **प्रश्नोऽत्रोत्तरं**—तद्वहनानन्तरं षण्मासमध्य एव मालापरिधापनं शुद्ध्यतीत्येकान्तो ज्ञातो नास्ति परं त्वरितं परिधाप्यते तदा वरमिति ॥ १०९ ॥

तथा—उपधानवाचना तपःपूर्त्तौ तपोदिने एव दीयतेऽन्यथा वा इति **प्रश्नोऽत्रोत्तरं**—पूर्णे तपस्युपधानवाचना दीयमानाऽस्ति, परं तपोदिने एव दीयते इत्येकान्तो ज्ञातो नास्तीति ॥ ११० ॥

तथा—क्षारककरीरादिकमातपे दत्त्वा पश्चात्तैलादिदाने सन्धानकं भवति नवेति **प्रश्नोऽत्रोत्तरं**—क्षारककरीरादिकं दिनत्रयमातपे दत्त्वा पश्चात्तैलादिदापने न सन्धानकं जायत इत्थं श्रीपरमगुरुपार्श्वे श्रुतं नास्ति, एवंविधान्यक्षराण्यपि दृष्टानि न सन्ति, प्रत्युत क्षारककरीरादिकमध्ये स्थितं पानीयं दिनत्रयोपरि यदि न शुष्यति तदा सन्धानकं जायत इति ॥ १११ ॥

तथा—'पच्छा इरिआवहियाए' इति पाठानुसारेण श्राद्धानां सामायिककरणानन्तरमीर्यापथिकीप्रतिक्रमणं दृश्यते, तस्यार्थः प्रसाद्य इति **प्रश्नोऽत्रोत्तरं**—एतस्य विस्तरः सर्वोऽप्यावश्यकचूर्णिमध्येऽस्त्यन्ये ग्रन्थास्तु सर्वे तदनुसारिणो वर्त्तन्ते, तथाऽऽवश्यकचूर्णिमध्ये ईर्यापथिकी सामायिकसम्बद्धा कथिता नास्ति, यतो 'जइ चेइयाइं अत्थि' इत्यादिकस्तत्र पाठः कथितोऽस्ति, तस्माच्चैत्यगमनसम्बद्धाऽसौ ज्ञायते, अन्यस्तु सामायिककरणविधिरीर्यापथिकीप्रतिक्रमणमुखवस्त्रिकाप्रतिलेखनादिः सर्वः परम्परया ज्ञायते, तत ईर्यापथिकीं प्रतिक्रम्यैव सामायिकं करणीयमिति ॥ ११२ ॥

तथा—'सरीरमुस्सेह अंगुलेण तह' त्ति वचनादेकान्तेन किं शरीरमानमिति **प्रश्नोऽत्रोत्तरं**—उत्सेधाङ्गुलेन शरीरमानमुक्तमस्ति, तथापि तत्प्रायिकं सम्भाव्यते, तेन न काप्यनुपपत्तिः, यद्येकान्ततः शरीरमानमुत्सेधाङ्गुलेनैव स्यात्तदा प्रज्ञापनोपाङ्गादावुक्तो द्वादशयोजनप्रमाणशरीरोऽसालिकाजीवो महाविदेहादिचक्रिणां प्रमाणाङ्गुलेन द्वादशयोजनप्रमाणस्य स्कन्धावारस्य विनाशहेतुः कथं सम्भवति ? कथं वा कृतलक्षयोजनवैक्रियरूपेण सौधर्मदेवलोकं गतेन तेन चमरेन्द्रेणैकः पादः पद्मवरवेदिकायां मुक्तोऽपरश्च सुधर्मसभायामित्यादिकं भगवत्युक्तं सम्भवतीति बोध्यम् ॥ ११३ ॥

तथा—मुखपोतिकाप्रतिलेखनाया ' सुत्तत्थ तत्तदिट्ठी ' त्यादि भावना कथितास्ति, सा स्थापनाचार्यप्रतिलेखनायां क्रियते न वेति प्रश्नोऽत्रोत्तरं–प्रवचनसारोद्धारसूत्रवृत्तिप्रतिक्रमणहेतुगर्भप्रमुखग्रन्थादिषु मुखवस्त्रिकादेहयोः पञ्चाशत्प्रतिलेखनानां भावना कथिताऽस्ति न तु स्थापनाचार्यप्रतिलेखनायाः, तथापि मुखवस्त्रिकाप्रतिलेखनायास्त्रीणि कारणानि कथितानि, यथा–जइवि पडिलेहणाए, हेऊ जियरक्खणं जिणाणा य। तहवि इमं मणमक्कडनिज्जंतणत्थं मुणी बिंति ॥ १ ॥ इति, तानि तु स्थापनाचार्यादिप्रतिलेखनायामपि ज्ञायन्त इति बोध्यम् ॥ ११४ ॥

तथा—श्राद्धानामुपवासे तन्दुलधावनं रक्षानीरं च कल्पते नवेति प्रश्नोऽत्रोत्तरं–तेषामुपवासे प्रासुकमुष्णोदकं चेति पानीयद्वयं कल्पते तन्दुलधावनं रक्षाजालं च प्रासुकं भवति, परं श्राद्धानां न कल्पत इति ॥ ११५ ॥

तथा—कृष्णेनाऽष्टादशसहस्रसाधूनां वन्दनकानि दत्तानि तानि किं लब्ध्याऽन्यथा वा ? यदि लब्ध्या तदा वीरासालविकस्यापि तथैवान्यथा वेति प्रश्नोऽत्रोत्तरं—कृष्णेन सहस्रादिपरिवारसहितथावच्चापुत्रादीनामग्रेसराणां वन्दनकानि दत्तानि, तदनुयायिसमस्तपरिवारस्यापि तानि समागतान्येव, ततो मनसा त्वष्टादशसहस्रसाधूनां दत्तान्येव, यदीत्थं न कथ्यते तदा वेला न प्राप्नोति, यतो दिनमानं तदा महन्नाभूत्तया कृष्णस्यापि वन्दनकदानलब्धिर्ज्ञाता नास्ति, तस्माद्वीरासालविकस्य वन्दनकदाने न काप्याशङ्केति ध्येयम् ॥ ११६ ॥

तथा—चैत्रमासवृद्धौ कल्याणकादि तपः प्रथमे द्वितीये वा मासि कार्यत इति प्रश्नोऽत्रोत्तरं—प्रथमचैत्राऽसितद्वितीयचैत्रसितपक्षाभ्यां चैत्रमाससम्बद्धं कल्याणकादितपः श्रीतातपादैरपि कार्यमाणं दृष्टमस्ति, तेन तथैव कार्यमन्यथा भाद्रपदवृद्धौ मासक्षपणादितपांसि कुत्र क्रियन्त ? इति ॥ ११७ ॥

तथा—' उच्चनीयमज्झिमकुलाइं अडइ ' इति अत्र लुम्पाका नीचशब्देन सर्व्वाणि नीचकुलानि वदन्ति, तत्कथमिति प्रश्नोऽत्रोत्तरं—नीचकुलानि—दरिद्रकुलानि उच्चकुलानि—ऋद्धिमत्कुलानीति श्रीदशवैकालिकवृत्त्यादिषु व्याख्यातमस्तीत्यतो नीचशब्देनाऽनृद्धिमत्कुलानि ज्ञेयानि न तु गर्हणीयकुलानि, तथा च दशवैकालिकेऽपि ' पडिकुट्ठकुलं न पविसे ' इत्यादि सूपपन्नमिति ॥ ११८ ॥

तथा—समुदानीभिक्षा किमुच्यते इति प्रश्नोऽत्रोत्तरं—उच्चावचं धनापेक्षया उत्तमाधमं कुलं चरेत् सा समुदानीभिक्षोच्यते इति श्रीदशवैकालिकसूत्रपिण्डैषणाध्ययनवृत्त्यादिपूक्तमस्तीति ॥ ११९ ॥

तथा—पौषधिकेन जिनालये गत्वा प्रहरे सार्द्धप्रहरे वा देवा वन्दितास्तस्य कालवेलायां पुनर्देववन्दनं युज्यते न वेति प्रश्नोऽत्रोत्तरं—येनाऽकाले देवा वन्दितास्तस्य कालवेलायां पुनर्देववन्दनं युज्यते, यतः कालवेलाकार्यं कालवेलायामेव कर्त्तव्यं, परम्पराऽप्येवमेव दृश्यत इति ॥१२०॥

## अथ पण्डितदेवविजयगणिकृतप्रश्नास्तदुत्तराणि ।

यथा—उपस्थापनायाः प्राक् दशवैकालिकयोगोत्तरं सप्तमण्डल्या आचाम्लानि कारयितुं कल्पन्ते न वेति प्रश्नोऽत्रोत्तरं—निर्व्यूढेऽपि दशवैकालिकयोगे विनोपस्थापनां सप्तमण्डल्या आचाम्लानि कारयितुं न कल्पन्ते, योगविधावप्येतदुक्तमस्तीति ॥ १२१ ॥

तथा—चतुरशीतिलक्षपूर्व्वायुषां श्रीऋषभदेवेन सार्द्धं मोक्षं गतानां भरतस्याष्टनवतिभ्रातॄणामायुरपवर्त्तनं कथमिति प्रश्नोऽत्रोत्तरं—बाहुबलेरिव यदि तेषामायुश्चतुरशीतिलक्षपूर्व्वप्रमाणं क्वापि ग्रन्थे प्रोक्तं स्यात् तदा तदपवर्त्तनस्य हरिवंशकुलोत्पादयुगलिकायुरपवर्त्तनादिवदाश्चर्यान्तर्भावान्न दोष इति ॥ १२२ ॥

तथा—यतिः श्राद्धगृहे गत्वोपविश्य भक्तादिकं गृह्णाति नवेति प्रश्नोऽत्रोत्तरं—यतिः श्राद्धगृहे कारणं विनोपविश्य भक्तादिकं न

गृह्णाति, " तिण्हमण्णयरागस्स, निसिज्जा तस्स कप्पइ । जराए अभिभूअस्स, गिलाणस्स तवस्सिणो ॥ १ ॥ " इति दशवैकालिकषष्ठाध्ययने प्रतिपादितत्वादिति ॥ १२३ ॥

तथा—पौषधदिने श्राद्धः प्रतिक्रमणं कृत्वा देवान् वन्दित्वा पश्चात् पौषधं करोति तथा कृतः पौषधः शुद्ध्यति न वा इति प्रश्नोऽत्रोत्तरं-पौषधं कालवेलायां कृत्वा प्रतिक्रमणं च कृत्वा देवान् वन्दत इति विधिः, कालातिक्रमादिकारणवशात्तु पूर्वं देवान् वन्दित्वा पश्चात्पौषधं गृह्णातीति ॥ १२४ ॥

तथा—प्रवालाद्यक्षमालाग्रे प्रतिक्रान्तिः शुद्ध्यति न वेति प्रश्नोऽत्रोत्तरं—सूत्रीयनिश्चलमणिकाक्षमालाग्रेस्थापनपुरःसरक्रियाकरणविधिर्दृश्यते परम्परयेति ॥ १२५ ॥

तथा—साधूनां सप्त चैत्यवन्दनानि प्रोक्तानि, तेषां मध्ये प्रतिक्रमणयोर्द्वे चैत्यवन्दने कुत्र स्थाने क्रियते इति प्रश्नोऽत्रोत्तरं—प्राभातिकप्रतिक्रमणे 'इच्छामो अणुसट्ठिं' इति कथनानन्तरं यद्देववन्दनं क्रियते, तत्रैकं चैत्यवन्दनं, सन्ध्याप्रतिक्रमणे तु दैवसिकप्रतिक्रमणस्थापनादर्वाग् यद्देववन्दनं क्रियते तच्चैत्यवन्दनं द्वितीयमित्यक्षराणि सङ्घाचारवृत्तौ सन्तीति ॥ १२६ ॥

तथा—एकोनत्रिंशदधिकद्विशतषष्ठोच्चारः कृतोऽस्ति, परं शक्त्यभावे एकान्तरोपवासैः कर्तुं शुद्ध्यति न वा इति प्रश्नोऽत्रोत्तरं—एकोनत्रिंशदधिकद्विशतषष्ठा उच्चरितास्तदा षष्ठा एव कर्तुं शुध्यन्ति ॥ १२७ ॥

तथा—आश्विनचैत्राऽस्वाध्यायमध्ये उपवासः क्रियते स विंशतिस्थानकमध्ये प्रक्षेप्तुं शुद्ध्यति न वेति प्रश्नोऽत्रोत्तरं—आश्विनचैत्राऽस्वाध्यायमध्ये सप्तम्यादिदिनत्रयकृतोपवासो विंशतिस्थानकमध्ये प्रक्षेप्तुं न शुध्यतीति ॥ १२८ ॥

तथा—श्रीवीरजन्मनि गुलपर्प्पटिकादिभोजनं लात्वाऽऽगच्छन्ति तदुपरि यतीनां वासक्षेपः कृतः शुद्धयति नवा इति प्रश्नोऽत्रोत्तरं—श्रीवीरजन्मनि गुडपर्प्पटिकादिभोज्योपरि सुविहिताना वासक्षेपपरम्परा नास्तीति ॥ १३० ॥

## अथ पण्डितश्रीविनयकुशलगणिकृतप्रश्नास्तदुत्तराणि च—

यथा—' चरगपरिव्वाय बंभलोगो जा ' इति वचनानुसारेण द्वादशे स्वर्गे ग्रैवेयके च मिथ्यात्विनः केऽवतरन्तीति प्रश्नोऽत्रोत्तरं—द्वादशस्वर्गे गोशालकमतानुसारिणः आजीविका मिथ्यादृशो व्रजन्ति, ग्रैवेयके तु यतिलिङ्गधारिनिह्नवादयो मिथ्यादृष्टयो व्रजन्तीत्यौपपातिकादौ प्रोक्तमस्तीति ॥ १३१ ॥

तथा—तामलिनाऽन्ते साधवो दृष्टाः सम्यक्त्वं च प्राप्तमिति प्रघोपः क्व शास्त्रेऽस्तीति प्रश्नोऽत्रोत्तरं—अयं प्रघोषः श्री जिनेश्वरसूरिकृतकथानककोशे वर्त्तते ॥ १३२ ॥

तथा—इन्द्रास्सर्व्वेऽपि सर्व्वदा सम्यग्दृष्टय एव मिथ्यादृष्टयोऽपि वा कदाचिद्भवन्तीति प्रश्नोऽत्रोत्तरं—सर्वेऽपीन्द्रास्सर्व्वदा सम्यग्दृष्टय एव सम्भाव्यन्ते, न तु मिथ्यादृष्टयो, यतो जम्बूद्वीपप्रज्ञप्त्यादौ निर्व्वाणकल्याणकादौ ' निराणंदे अंसुपुण्णनयणे ' इत्यादिभक्तिप्राग्भारसूचकानि तेषां विशेषणान्युपलभ्यन्ते ॥ १३३ ॥

तथा—छक्कियाख्योपधाने उच्चरितपञ्चमीतपसां षष्ठदिने पञ्चमी समेति तदा पञ्चम्युपवासं कृत्वा सप्तमदिने आचाम्लं करोति किं वा षष्ठं करोतीति प्रश्नोऽत्रोत्तरं—सप्तमदिने उपवासस्यावश्यकरणीयत्वेन षष्ठं करोति, शक्त्यभावे तु तदनुसारेणैवोपधानप्रवेशं करोतीति ॥ १३४ ॥

